( नितान्तं गोपनीयम् । )

"वघेलवंशावतंसमहाराजश्रीवीरभद्रदेवेन विरचितः"

# कन्दर्पचूडामणिः ।

आयुर्वेदीयग्रन्थमालासंपादकेन
वैद्य जादवजी त्रिकमजी आचार्य
इत्यनेन संशोधितः ।



मुम्बय्यां
'मणिलाल इच्छाराम देसाई' इत्यनेन स्वीये
'गुजराती न्यूस' मुद्रणयन्त्रालये मुद्रितः ।
कोट बेंक-हाउस लेन ।

वि. सं. १९८१

# निवेदनम्—



धर्मार्थकाममोक्षा इति चतुर्विधः पुरुषार्थवर्गः। तत्र 'सम्यगाचरिता धर्मार्थकामा निःश्रेयसेन महतोपपादयन्ति पुरुषमिह चामुष्मिंश्च लोके' इत्याहस्म भगवान् पुनर्वसुरात्रेयः। तेषां सम्यगाचरणं च शास्त्रज्ञानमूलकमेव। तत्र सम्यग्ज्ञानं धर्मस्य मन्वादिप्रणीतधर्मग्रन्थेभ्यः, अर्थस्य बृहस्पत्यादिप्रणीतार्थशास्त्रेभ्यः, कामस्य च श्वेतकेतुबाभ्रव्यादिप्रणीतकामशास्त्रेभ्यः संजायते। श्वेतकेतुबाभ्रव्यादिरचिततन्त्रेभ्यः सारमादाय संक्षिप्य सर्वमर्थमल्पेन ग्रन्थेन कामसूत्रं प्रणीतवान् वात्स्यायनः। सम्प्रत्यपि तु कामतन्त्रेषु केवलं वात्स्यायनीयं कामसूत्रमेवोपलभ्यते, अन्यानि तु विलुप्तान्येव तन्त्राणि। तदेवावलम्ब्य क्वचित्स्वानुभवेन चोपबृंह्य बहवो ग्रन्था विरचिता तदुत्तरकाले क्षेमेन्द्रदामोदरगुप्तरन्तिदेवकल्याणमल्लप्रभृतिभिः। तदिदं वात्स्यायनीयं कामतन्त्रं सूत्ररूपत्वादतिगम्भीरार्थत्वेन मन्दमतीनां न सुखावबोधमिति तद्विशदयितुं वात्स्यायनानुरुद्धानेवार्थान् आर्यावृत्तेनोपनिबध्य कन्दर्पचूडामणिनामकमिमं ग्रन्थं प्रणीतवान् श्रीवीरभद्रदेवः। सोऽयं श्रीवीरभद्रदेवो वघेलाख्यक्षत्रियवंशोद्भूत, १६३३ मिते विक्रमाब्दे ग्रन्थमिमं निर्ममे इति स्वयमेव ग्रन्थान्ते लिखितवान्[1]। वघेलवंशीयानां निवासभूमिस्तु सम्प्रति वघेलखण्ड इति प्रसिद्धं रीवां(रेवा)राज्यमेव। ग्रन्थस्यास्य संशोधनार्थमादर्शपुस्तकत्रयमुपलब्धमस्माभिः। तत्र

१ क. संज्ञया संकेतितं अस्मत्परमसुहृदां स्व. वा. त्र्यम्बक गुरुनाथ काळे इत्येषां सकाशाल्लब्धम्।

---

१ हरलोचनहरलोचनरसशशिभिर्विश्रुते समये।
फाल्गुनशुक्लप्रतिपदि पूर्णो ग्रन्थः स्मरस्मेरः॥ १॥
अ. ७ अ. २ श्लो. ४१

४ निवेदनम्।

२ ख. सञ्ज्ञया सङ्केतितं स्व. वा. रीवामहाराजानां श्रीवेङ्कटरमणसिंहदेव सी. एस आई इत्येतेषामाज्ञया रघुराज (सतना) नगरे १९०८ खिष्टाब्दे मुद्रितम्। रीवानगरस्थैरस्मन्मित्रैः राजवैद्यवाल्मिकीप्रसादशर्मभिः प्रेषितम्।

३ ग. सञ्ज्ञया सङ्केतितं पुण्यपत्तनस्थडॉ. भाण्डारकरसंस्थापितप्राच्यान्वेषणशालातः प्राप्तम्।

एवं पुस्तकत्रयसहायेन ग्रन्थस्यास्य संशोधने यथामति कृतो यत्नः। तथाऽपि भ्रमप्रमादादिवशाज्जातं स्खलनं कापि उपलभ्येत चेद्विद्वद्भिः संशोधनीयं क्षन्तव्यश्चाहमिति

यादवशर्मणः।

# कन्दर्पचूडामणेर्विषयानुक्रमणिका ।

### प्रथमे साधारणेऽधिकरणे प्रथमोऽध्यायः ( शास्त्रसंग्रहः ) ।



### प्रथमे साधारणेऽधिकरणे द्वितीयोऽध्यायः । ( त्रिवर्गप्रतिपत्तिः ) ।



### प्रथमे साधारणाधिकरणे तृतीयोऽध्यायः ( विद्यासमुद्देशः ) ।

## प्रथमे साधारणाधिकरणे चतुर्थोऽध्यायः ( नागरकवृत्तम् ) ।

द्वितीये सांप्रयोगिकेऽधिकरणे द्वितीयोऽध्यायः ( आलिङ्गनविचाराः ।

## द्वितीये सांप्रयोगिकेऽधिकरणे सप्तमोऽध्यायः ( प्रहणनयोगाः )।



## द्वितीये सांयोगिकेऽधिकरणेऽष्टमोऽध्यायः ( पुरुषायितम् )।

द्वितीये सांप्रयोगिकेऽधिकरणे नवमोऽध्यायः ( औपरिष्टकम् )।

द्वितीये सांप्रयोगिकेऽधिकरणे दशमोऽध्यायः ( रतारम्भावसानिकम् ) ।

पञ्चमे पारदारिकेऽधिकरणे चतुर्थोऽध्यायः ( दूतीकर्माणि ) ।



पञ्चमे पारदारिकेऽधिकरणे पञ्चमोऽध्यायः ( ईश्वरकामितम् ) ।

षष्ठे वैशिकाधिकरणे द्वितीयोऽध्यायः ( कान्तानुवृत्तम् ) ।



षष्ठे वैशिकाधिकरणे तृतीयोऽध्यायः ( अर्थागमोपाया ) ।



षष्ठे वैशिकाधिकरणे चतुर्थोऽध्यायः ( विशीर्णप्रतिसंधानम् ) ।

॥ श्रीः ॥

# श्रीवीरभद्रदेवविरचितः

## कन्दर्पचूडामणिः ।

### साधारणं नाम प्रथमाधिकरणम् ।

### प्रथमोऽध्यायः ।

अरुणाऽपि दृक्कोपाद्भवत्यनुरक्तेषु सानुरागेव ।
कल्याणाय जगत्या दृष्टिः श्रीभैरवस्यास्तु ॥ १ ॥
प्रणमत रहसि सतृष्णं कृष्णं स्मरशास्त्रपारगं विज्ञाः ।
पीयूषादपि मधुरेऽधरविम्बे गोपकन्यायाः ॥ २ ॥
मन्त्री वसन्तसमयो यस्य च राजीवलोचना राज्यम् ।
वाहा मलयसमीराः पञ्चशरोऽसौ नृपो जयति ॥ ३ ॥
वंशः कंसद्विष इव जयति वघेलस्य भूभुजां मान्यः ।
अजघन्योऽस्मिन् जगत्यां यस्मादन्यो न भूपालः ॥ ४ ॥
प्रादुर्बभूव वंशे तत्र श्रीशालिवाहनो नृपतिः ।
इन्दुर्मरन्दबिन्दुर्यस्य यशःपुण्डरीकस्य ॥ ५ ॥
भिन्नस्य शीतमहसः सुषिरं लक्ष्मेति मन्यते लोकः ।
विधुर्यदीयविधुरैर्निशि निहतैर्भास्करभ्रान्त्या ॥ ६ ॥
प्रादुर्बभूव तस्माद्वीरः श्रीवीरसिंहाख्यः ।
यस्य यशोम्बुजकोशे स्फारा मकरन्दबिन्दवस्ताराः ॥ ७ ॥
यस्य करेण करादिह समरे रिपुभूमिवारणाधिपतेः ।
दानाम्बुसंगशोभा सानियया लुण्ठिता झटिति ॥ ८ ॥
वीरस्तदङ्गजन्मा प्रतिभटपृतनातपस्विनीभानुः ।

---

१ पृतना सेना ।

श्रीवीरभानुनामाऽधिपतिरभूद्भुभुजां जगति ॥ ९ ॥
श्रुत्वाऽपि वीरभानोर्दानकथा नेह जातलज्जानि ।
वृक्षोपलपशुभावादैवततरुधेनुरत्नानि ॥ १० ॥
कामादप्यभिरामो भीमादपि बाहुशालिनां मान्यः ।
कर्णादपि च वदान्यो जयति सुतो रामचन्द्रोऽस्य ॥ ११ ॥
श्रीरामेणारब्धे दाने गजवाजिनोर्मुखैक्येन ।
वक्रानननो गणपतिर्भीत्याऽभूत्तुम्बुरुः खचरः ॥ १२ ॥
राजोचितगुणसीमा भीमावरजादिहाधिको धनुषि ।
तनयो विनयसमुद्रो जयतितरां वीरभद्रोऽस्य ॥ १३ ॥
विद्यायां सुरगुरुरिव सौन्दर्ये पञ्चबाणतोऽप्यधिकः ।
दाने कल्पतरोरयमुपमेयस्तेन केनेह ॥ १४ ॥
चूडामणिं स्मृतिभुवो ग्रन्थं श्रीपञ्चबाणशास्त्रेऽसौ ।
वात्स्यायनानुरुद्धं कुरुते कुतुकात्तदहृद्वृत्तिः ॥ १५ ॥
कामागमानुसारिणि मनसिजचूडामणाविह ग्रन्थे ।
अधिकरणे प्रथमेऽस्मिन्प्रथमोऽध्यायो विधीयते प्रकटः ॥ १६ ॥
लक्षं त्रिवर्गशासनमध्यायानां प्रजापतिश्चक्रे ।
सृष्ट्वा प्रजाः समस्तास्तासां स्थितये मनुस्तस्य ॥ १७ ॥
एकं देशं चक्रे पृथगिह धर्माधिकारिकं मतिमान् ।
अर्थाधिकारिकं गुरुरमरपतेः, कामसूत्रं तु ॥ १८ ॥
नन्द्यध्यायसहस्रं कृतवान्संक्षेपमस्य चार्धेन ।
पञ्चभिरध्यायशतैरौद्दालकिरादरादकृत ॥ १९ ॥
बाभ्रव्यः पाञ्चालः साधारणसाम्प्रयोगिकप्रमुखैः ।
संचिक्षेप तदर्थानधिकरणैः सप्तभिर्मतिमान् ॥ २० ॥

---

१ तुम्बुरु अश्वमुखो गन्धर्वः । २ भीमावरजात् अर्जुनात् । ३ औद्दालकि उद्दालकपुत्र श्वेतकेतु । ४ साधारणसाम्प्रयोगिककन्यासम्प्रयुक्तकभार्याधिकारिकपारदारिकवैशिकौपनिषदिकाख्यैरित्यर्थः ।

अध्यर्धं शतमस्मिन्नध्यायानां प्रकीर्तितं, तस्मात् ।
षष्ठं दत्तकनामा वैशिकैमेकं पृथक्चक्रे ॥ २१ ॥
भार्याधिकारिकं किल गोनर्दीयः स्मरागमाचार्यः ।
घोटकमुखः पृथक्तां कन्यासंयुक्तके कृतवान् ॥ २२ ॥
चारायणः प्रसंगात्साधारणमेव केवलं कृतवान् ।
चक्रे सुवर्णनाभः सांप्रयोगिकमेव भेदेन ॥ २३ ॥
औपनिषदिकं चक्रे कुचुमारो मारदर्शने स्रष्टा ।
संप्राह पारदारिकमादरतो गोणिकापुत्रः ॥ २४ ॥
खण्डश एताः कृतयः प्रोच्छिन्नास्तत्र किं चित्रम् ।
सम्यग्ज्ञानविरहितो नहि लोकः सज्जते क्वापि ॥ २५ ॥
बाभ्रव्यस्य कृतादपि न ज्ञानं कामतन्त्रतत्त्वस्य ।
महदिदमिति नाध्येतुं यस्माच्छक्यं नृणामेतत् ॥ २६ ॥
एवं स्मरागमीयं प्रलोच्छेदं जगद्धिते युक्तः ।
वात्स्यायनः प्रचक्रे सूत्रं कामस्य संक्षिप्य ॥ २७ ॥
मत्वा दुरधिगमं तद्दृष्ट्वा महतां च ताः कृतीः सुकृती ।
श्रीवीरभद्रदेवः सोद्योगः कामशास्त्रेऽसौ ॥ २८ ॥
वात्स्यायनानुरुद्धानर्थानिह पुष्यन्ननोऽभिमतान् ।
श्रीवीरभद्रपतिशानार्थाद्रचेन संतनुते ॥ २९ ॥
अधिकरणे प्रथमेऽस्मिन् शास्त्रे साधारणादये पञ्च ।
अध्यायाः परिदिष्टाः शास्त्रोदितसंग्रहः प्रथमः ॥ ३० ॥
तदनु त्रिवर्गसिद्धिर्विद्योद्देशस्ततः परं तस्मात् ।
वृत्तं नागरिकाणां दूतीकर्मविमर्शनं पश्चात् ॥ ३१ ॥
अधिकरणान्तरविषयास्तेष्वध्यायाश्च संख्यया सहिताः ।
ज्ञेयाः प्रत्यधिकरणं नेहातस्ते निरूप्यन्ते ॥ ३२ ॥

---

१ 'वेशो वेश्यावृत्तं तत्प्रयोजनमस्येति वैशिकम्' जयमङ्गला । २ 'सुकुमारः' क. । ३ 'जगद्धितोद्युक्तः' क. । ४ 'दूतीकर्मा-वमर्शनं' ख. ।

श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते।
साधारणेऽधिकरणे प्रथमोऽध्यायः कृतः साङ्गः ॥ ३३ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ प्रथमे
साधारणेऽधिकरणे प्रथमोऽध्याय।

---

## अथ प्रथमे साधारणाधिकरणे द्वितीयोऽध्यायः।



श्रीवीरभद्रकृतिना मनसिजचूडामणाविह ग्रन्थे।
क्रियतेऽध्यायः प्रकटः प्रथमाधिकृतिद्वितीयोऽसौ ॥ १ ॥
अर्थान्विद्यादीनिह बाल्ये सेवेत, यौवने कामम्।
तदुपरि धर्मं मोक्षं समयविभागस्त्रिवर्गस्य ॥ २ ॥
अनपेक्ष्य वा समयानायुर्नियमानपेक्षया विबुधः।
अन्योन्यानभिघातं सेवेतार्थादिकान् वर्गान् ॥ ३ ॥
प्राग्विद्याभ्यसनादिह संतनुयात्कामसेवनं नैव।
मन्त्रादिभिरभियुक्तैर्विहितं तद्ब्रह्मचर्येण ॥ ४ ॥
केवलकामवशत्वे प्रक्षीणार्थो न चाश्नुयात्कामम्।
धर्मं चेति तदर्जनरक्षणनिरतो भवेल्लोकः ॥ ५ ॥
धर्मानाचरणे खलु कामैरर्थैः क चास्ति संयोगः।
कामकलानाचरणे वैयर्थ्यं स्यात्तयोरेव ॥ ६ ॥
सेवेतास्मात्त्रितयं नैवाभिभवोऽत्र तेषु कस्यापि।
धर्मक्रियाल्पतायाः शूद्राणां गौरवं कामे ॥ ७ ॥
राज्यस्यार्थवशत्वादर्थप्राधान्यमाचरेद्राजा।
इति वात्स्यायनहृदयं न त्वर्थो राज्ञ एवेति ॥ ८ ॥
यागादयोऽदृष्टतया लौकिकमानस्य गोचरा नैव।
तस्य प्रवर्तनं यद्धर्मोऽसौ कथ्यते लोकैः ॥ ९ ॥

---

१ 'अनित्यत्वादायुषो यथोपपादं वा सेवेत' इति (का० सू० अ० १ अ० २ सू० ५)

मांसादिभक्षणानां दृष्टार्थानां निवृत्तिरपि शास्त्रात् ।
धर्मः कथितो विदुषा बोधस्तस्य श्रुतिप्रभृतेः ॥ १० ॥
न च संदिग्धफलत्वादारम्भो नैव यज्ञदानादेः ।
अभिचारादिवदेषां श्रुतिमूलत्वात्फलावभृतेः ॥ ११ ॥
विद्याभूम्यादीनामर्जनमेतस्य वर्धनं चार्थः ।
वात्स्यायनेन कथितं तस्य ज्ञानं वणिक्प्रभृतेः ॥ १२ ॥
अर्थः कालाधीनः किमिह कृतेनेति केचनाचार्याः ।
आवश्यकी प्रवृत्तिः पुरुषस्यार्थमित्यन्ये ॥ १३ ॥
श्रोत्रादीनामर्थे स्वे स्वे याः स्युः प्रवृत्तयः सरसाः ।
ता वात्स्यायनमुनिना कामे सामान्यतः कथिताः ॥ १४ ॥
स्पर्शानुभवप्रभवो यः पुरुषार्थो विशिष्यतेऽन्यस्मात् ।
कामः स तु प्रधानं मदनोदय इत्यमाम्नातम् ॥ १५ ॥
श्रीमल्लक्ष्मणदेवः कथयति तत्रैव तं च वैशिष्ट्यम् ।
यत्रोभावपि भोग्यौ भोक्तारौ चैव निर्दिष्टौ ॥ १६ ॥
सुखमिह वस्त्रादिभवं भोक्तुः पुरुषस्य केवलं भवति ।
आर्यासजं जनानामत्र तु युगपद्द्वयोः प्रथितम् ॥ १७ ॥
कथितं लक्षणमन्यैर्यातीदं बाललालनाचरणे ।
पितुरिव तत्रानन्दो भवति न किं लालनीयस्य ॥ १८ ॥
लीलायामिह यस्यां भवतितरां पुष्पधन्वनोऽनुसृतिः ।
सेह निगदितः कामो मतमेतद्वीरभद्रस्य ॥ १९ ॥
दृष्ट्वा दशवदनादेः कामासक्त्या तथा महानिष्टम् ।
तादृशमेव न कुर्यान्न तु कामं नाचरेदेव ॥ २० ॥
तत्प्रतिपत्तौ हेतुर्मनसिजसूत्रं च नागरासङ्गः ।
समवाये त्वनयोरिह पूर्वो ज्ञाने गरिष्ठः स्यात् ॥ २१ ॥

---

१ 'श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानामात्मसंयुक्तेन मनसाऽधिष्ठितानां स्वेषु विषयेष्वानुकूल्यतः प्रवृत्तिः कामः' का० सू० (अ० १ अ० २ सू० ११)
२ आयासममिति विशिष्टानियन्त्रनम् । ३ पूर्व इति कामसूत्ररूप उपायः ।

धर्मे भवन्तु विद्या याभिर्विनाऽत्र न जायते बोधः ।
अस्तु तथाऽर्थे हेतुरस्योद्बोधो यतः शास्त्रात् ॥ २२ ॥
कामे तु तिर्यगादेः शास्त्रकथं तावबोधविधुरस्य ।
भवति यथा कृतिरेवं स्यादन्येषां स्वतःसिद्धा ॥ २३ ॥
तस्मान्न शास्त्रकृत्यं कामेऽखिललोककाम्यमानेऽपि ।
इति केचिदाहुरार्या नैतद्वात्स्यायनो मनुते ॥ २४ ॥
परतन्त्रा प्रयुक्ता निरुपाया साधुसंप्रयोगस्य ।
कृतिरेतत्प्रतिपत्तिः शास्त्राधीना यतोऽभिमता ॥ २५ ॥
पशुषु त्वनावृतत्वात्स्त्रीणामास्तामपार्थकं शास्त्रम् ।
ऋतुकालावगतिः खलु शास्त्रादेव स्मरानुगुणा ॥ २६ ॥
यदि शास्त्राभिमतानां बोद्धा नैवास्त्युपायजातानाम् ।
नेह सुखाय समर्थः सम्यक्कान्तोऽपि कान्तायाः ॥ २७ ॥
भवतु च बीजविसर्गः शास्त्रोपायं विनैव केषांचित् ।
आनन्दस्य विशेषो भवति पुनः संप्रयोगेण ॥ २८ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
साधारणेऽधिकरणे रचितोऽध्यायो द्वितीयोऽसौ ॥ २९ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ प्रथमे
साधारणेऽधिकरणे द्वितीयोऽध्यायः ।

---

## अथ प्रथमे साधारणाधिकरणे तृतीयोऽध्यायः ।

परिघाकृतिभुजवैभवभग्नप्रतिभूपवैभवेनेह ।
विशदः क्रियतेऽध्यायः प्रथमाधिकृतेस्तृतीयोऽसौ ॥ १ ॥
सहितान्यङ्गग्रन्थैः पुरुषोऽधीयीत कामसूत्राणि ।
विद्यानामनुपघ्नन् कालान् धर्मस्य चार्थस्य ॥ २ ॥
प्राग्यौवनात्तु युवतिः प्रत्ता सा पत्युराशयादेव ।

---

१ अत्र युवतीशब्द स्त्रीपर्यायो ज्ञेयः । प्रत्ता विवाहिता ।

स्त्रीभिः शास्त्राग्रहणादेतन्मिथ्येति केऽप्याहुः ॥ ३ ॥
तासां प्रयोगनिरतिं मत्वा शास्त्रेण तस्य बोधं च ।
तन्मूलं वात्स्यायन आहासां शास्त्रकृत्यानि ॥ ४ ॥
साक्षात्परंपरयाऽस्य शास्त्रं मूलं प्रयोगयोगस्य ।
असति व्याकरणादौ दुर्ज्ञेयाः साधुशब्दाद्याः ॥ ५ ॥
सन्त्यपि च शास्त्रसिद्धे बोधे निपुणाशयाः सुता राज्ञाम् ।
तस्मादन्यासामपि युक्तः शास्त्रग्रहः स्त्रीणाम् ॥ ६ ॥
चातुःषष्टिकयोगानेकाकिन्यभ्यसेद्रहस्येषा ।
आचार्याः पुनरस्या विश्वासादृद्धदास्याद्याः ॥ ७ ॥
गीतानि नृत्यवाद्ये सालेख्यानीह चित्रकर्माणि ।
दशनवसनाङ्गरागाः माल्यग्रथने विशेषाश्च ॥ ८ ॥
नेपथ्यसंप्रयोगा युक्तिज्ञानं तथेन्द्रजालस्य ।
पुष्पास्तरको रचना शयने मणिभूमिकाकर्म ॥ ९ ॥
भक्ष्यविकाराचरणं रत्नादीनां परीक्षणं तद्वत् ।
एतास्तदङ्गविद्या ज्ञेयाश्चान्यास्तथा मूलात् ॥ १० ॥
विस्तरभयान्न कथिताः सर्वा इह वीरभद्रदेवेन ।
चतुरधिकाः षष्टिकला वात्स्यायनसूत्रतो ज्ञेयाः ॥ ११ ॥
अवन्त्याः कलासु कुशलाः कुशलाः कुल्यास्तथाविधाः पुरुषाः ।
सार्थं कामपुमर्थं निरवग्रहमेव सेवन्ते ॥ १२ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
साधारणेऽधिकरणे रचितोऽध्यायस्तृतीयोऽसौ ॥ १३ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ प्रथमे
साधारणेऽधिकरणे तृतीयोऽध्यायः ।

---

१ '[illegible]' ख ।

## अथ प्रथमे साधारणाधिकरणे चतुर्थोऽध्यायः ।

---

अर्गलनिर्गलाद्वयदोर्द्वयविध्वस्तवैरिदर्पेण ।
आरभ्यते चतुर्थोऽध्यायः कामागमस्यासौ ॥ १ ॥
स्वस्वोचितैरुपायैर्विद्यावानाप्य संपदं पुरुषः ।
वंशक्रमागतां वा द्वेधा वा स्याद्गृहस्थोऽसौ ॥ २ ॥
विप्रः प्रतिग्रहद्रव्यां राजा जयजातसंपदां पात्रम् ।
क्रयविक्रयेण वैश्यः शूद्रो निर्वेशतो धनिकः ॥ ३ ॥
अधिगम्य तु गार्हस्थ्यं वृत्तं वर्तेत नागरानुगतम् ।
नगरादावुपरचयेदेष गृहं शोभनं स्वस्य ॥ ४ ॥
सति संभवे विरचयेत्सुधया सुधयेव शुद्धया श्वेतम् ।
मन्दिरमस्यानन्तरमुद्यानं कारयेद्रुचिरम् ॥ ५ ॥
विलसन्मरन्दतुन्दिलमधुपरवोन्निद्रमन्मथोल्लासम् ।
लीलाकुलकोकिलकुलकलनिःस्वनवर्धितानन्दम् ॥ ६ ॥
कुर्यात्कामपि वापीं कोकद्वन्द्वस्फुरत्स्वनारम्याम् ।
मन्दानलचलवीचीं चञ्चलकमलोल्लसन्नयनाम् ॥ ७ ॥
परिपूरितविषमाशुगतूणीराः[१] पुष्पसंपदा परया ।
रचयेदस्यास्तटभुवि मण्डपविभ्रमे लता वितताः ॥ ८ ॥
वाटीमध्ये मण्डपमुचितं ग्रीष्मोपयोगिलीलायाम् ।
रचयेत्परितो हिमितं शीकरपाटच्चरैः पवनैः ॥ ९ ॥
वासभवनदक्षिणभुवि मुक्ताफलजालवल्गुकल्लोला ।
उत्फुल्लफुल्लनिकरा पुष्करिणी कांक्षिता काऽपि ॥ १० ॥
ज्वलदुज्ज्वलप्रदीपैः कालागुरुधूपधूसरालोकैः ।
वासगृहं रचयेदिह रुचिरं कर्पूरपुष्पाद्यैः ॥ ११ ॥
वासगृहस्य च मध्ये विततवितानोपशोभिते देशे ।
शय्या रुचिरास्तरणा करणीया तोषदा मनसः ॥ १२ ॥

---

१ तूणीरा बाणाधाराः ।

अन्यैरप्युपकरणैः शीतलजलपर्णपूगसंभारैः ।
संभावयेद्गृहं तन्मन्मथमनसः प्रमोदाय ॥ १३ ॥
उद्दीपनं स्मृतिभुवो यद्यद्वा स्वरञ्जने शक्तम् ।
तत्तत्सर्वं रचयेत्किंबहुना भाषितेनेह ॥ १४ ॥
शयनीयस्य च भागे रचयेत्सिंहासनस्थलं शिरसः ।
तस्मिन्नेव च भागे रचनीया वेदिका श्लक्ष्णा ॥ १५ ॥
इत्थं कामानुगुणं वामाहृदयस्य चानुकूल्येन ।
रचयेन्निवासभवनं सन्निधिविलसद्वनोपवनम् ॥ १६ ॥
कुर्यात्सदन्तकाष्ठाः प्रातरिहोत्थाय तत्क्रिया नियताः ।
अनुलेपनं सधूपं किंपदादद्यात्तथा मालाम् ॥ १७ ॥
सालक्तकादिरुद्यन्मुखवासो वीक्ष्य दर्पणे वदनम् ।
कुर्यात्कार्यमतन्द्रो नित्यस्नानादिका नियताः ॥ १८[1] ॥
प्रातः क्रियाः क्रियाज्ञैरुदिताः पश्चात्र भेदतो विदिताः ।
पक्षेऽह्नीने हीने न्यूनास्ताः सन्तु कामेन (?) ॥ १९ ॥
न स्यात्संवृतकक्षः स्वेदः सततं भवेत्तथा भूयान् ।
पूर्वापराह्णयोरिह भोजनमुक्तं विहृत्यैव ॥ २० ॥
चारायणस्तु कथयति सायं समयेऽपि भोजनं प्रथितम् ।
कृतमध्यन्दिनकृत्यो भुञ्जीत प्रेयसीसहितम् ॥ २१ ॥
शुकसारिकाप्रलापनमथ युद्धं मेषकुक्कुटप्रभृतेः ।
अन्याश्चापि विरचयेत्क्रीडाः कलया यथायोगम् ॥ २२ ॥
विटपीठमर्दनियतान् व्यापारांस्तान्विदूषकस्याथ ।
दिवसे शय्या च तथा स्यादपराह्णे विहारोऽस्य ॥ २३ ॥
स्यादयमुचितो गोष्ठ्यै विरचितसम्यक्प्रसाधनश्चाथ ।

---

१ 'नित्यं स्नानं, द्वितीयकमुत्सादनं, तृतीयकः फेनकः, चतुर्थकमायुष्यं, पञ्चमकं दशमकं वा प्रत्यायुष्यमित्यहीनकं' इति सूत्रोक्ताः पञ्च शरीरसंस्कारार्थाः क्रियाः। 'तत्रायुष्यं श्मश्रुकर्म क्षुरेण तच्चतुर्थेऽह्नि स्यात्; प्रत्यायुष्यमिति यद्गुह्ये क्षुरेण कर्म तत्पञ्चमेऽह्नि स्यात्' इति जयमङ्गला।

तदनन्तरकर्तव्यं वात्स्यायनभाषितं कलयेत् ॥ २४ ॥
संगीतकं प्रदोषे प्रान्ते तस्य प्रसाधिते भवने ।
अभिसारिकाप्रतीक्षणपाप्तसहायः सुखं रचयेत् ॥ २५ ॥
प्रेषणमिह दूतीनां स्वयमथवा नायको गच्छेत् ।
तस्याः सविधे तु गता नानोपायैर्वशीकार्या ॥ २६ ॥
अपिदुर्दिनमभिसरणे निरतानां नष्टभूषणानां तु ।
स्वयमारचयेन्मण्डनमथवा मित्रेण कारयेदुचितम् ॥ २७ ॥
इति वीरभद्रकृतिना ख्याताऽहोरात्रकृत्यता तेन ।
सांप्रतमभिधीयन्ते संभूयक्रीडितानीह ॥ २८ ॥
व्यसनोत्सवगुरुपूजा यात्राचरणं च दैवतप्रभृतेः ।
संमत्या क्रियते यदि घटानिबन्धस्तदा कथितः ॥ २९ ॥
वेश्याभवने सदसि च भवने चैषां हि कस्यचिद्धुनिरे ।
तुल्यप्रबोधवयसां समविद्याशीलवित्तानाम् ॥ ३० ॥
अनुरूपैरालापैः पण्यस्त्रीभिः सहासनं गोष्ठी ।
काव्यसमस्या चैषां कलासमस्या च तत्रोक्ता ॥ ३१ ॥
लोकानामिह कान्ताः संपूज्यास्तास्तथोज्वला याश्च ।
प्रीतिस्तोमा एवं भवन्ति किल हारिताः सम्यक् ॥ ३२ ॥
अन्योन्यस्य गृहे वा पानं कथितं सुरासवप्रभृतेः ।
विविधफलाद्युपदंशं वेश्याया अन्ततः स्वस्य ॥ ३३ ॥
एतेनैव निरूपितमुद्याने यानमत्र विस्तारः ।
वात्स्यायनानुरुद्धः क्रियते श्रीवीरभद्रदेवेन ॥ ३४ ॥
पूर्वाह्णे कृतभूषास्तुरगानारुह्य वेश्यया सहिताः ।
प्रतिचारकैरनुगता गच्छेयुः शोभनोद्यानम् ॥ ३५ ॥
दैवतिकीमथ यात्रां यत्नादनुभूय तत्र युद्धानि ।
कुक्कटमेषप्रभृतेः पश्यन्तोऽन्यास्तथा प्रेक्षाः ॥ ३६ ॥
कुर्वन्तः शुभचेष्टाः समयानाक्षिप्य चेष्टता क्रियतः ।
उद्यानभोगचिह्नैः सहिताः प्रत्यात्रजेयुस्ते ॥ ३७ ॥

एतेनैव निरूपितमस्तग्राहे च पुष्करिण्यादौ ।
गमनं जललीलार्थं ग्रीष्मगते तेजसां धाम्नि ॥ ३८ ॥
कृतसमयैरिह पुरुषैः पक्षान्ते वाऽथ मासनिर्याणे ।
कस्मिंश्चिन्नियतेऽहनि सृजतु सभां भारतीभवने ॥ ३९ ॥
दद्युः प्रेक्षणमेकं येऽपूर्वास्ते कुशीलवाः सम्यक् ।
पूजां ते च लभेरन्नियतां तस्माद्द्वितीयेऽह्नि ॥ ४० ॥
दर्शनमथवोत्सर्गो निजेच्छया स्यात्ततः परं तेषाम् ।
आगन्तवश्च पूज्याः कृतसमवायाः स्फुरद्विनयम् ॥ ४१ ॥
कुर्याच्च यक्षरात्रिं सुखरात्रिः सा च कथ्यते लोके ।
ऐक्यं कोजागरया कौमुद्यास्तत्र निर्दिष्टम् ॥ ४२ ॥
सुवसन्तकोऽत्र शास्त्रे भवति वसन्तस्य वासरः प्रथमः ।
बिशखादिका सरस्यां बिशभुक्तिः कीर्तिता लोकैः ॥ ४३ ॥
मदनार्चिताम्रकुसुमैरवतंसे चाम्रभञ्जिका प्रोक्ता ।
अभ्यूषखादिकैवं ज्ञातव्या ग्रन्थतः परतः ॥ ४४ ॥
अन्योन्यं जलसेकः पानीयक्ष्वेडिकेरिता विबुधैः ।
कृत्रिमविवाहलीला कथिता नवपत्रिका तज्ज्ञैः ॥ ४५ ॥
कृत्रिमपुत्रकलीला स्यादनुपानं तथा तु पाञ्चाल त् ।
शाल्मल्यामधिरुह्य क्रीडैका शाल्मली कथिता ॥ ४६ ॥
युद्धं कदम्बमुकुलैः प्रविभज्य बलं परस्परं यत्र ।
स्यात्तत्कदम्बयुद्धं कुर्यादन्यास्तथा लीलाः ॥ ४७ ॥
एकत्र चारिणामिह विभवकलाद्वारयोपितश्चैव ।
नागरिकैश्च सखीभिश्चरितमनेनेह निर्दिष्टम् ॥ ४८ ॥
विभवविहीनो विद्यां जानन्निजदेहमात्रसाहाय्यः ।
पूर्वोद्देशात्त्रासः फेनकमुग्वसंपुतश्चैव ॥ ४९ ॥

---

१ अस्तग्राहे मकरादिरहिते । २ मासनिर्याणे मासान्ते । ३ 'पूज्याद्देशात्' इति सूत्रे पाठः । पूज्याद्देशात् शास्त्रकलाविद्भ्युपिनादिनि जयमङ्गला । ४ 'फेनकसन्वसंपत' इति पाठान्तरम् ।

निपुणः कलासु कथितैस्तस्यात्मानं प्रसाधयेद्यस्तु।
गोष्ठ्यां वेशे च तथा जानीयात् पीठमर्दं तम्॥ ५०॥
भोगसमापितविभवस्तत्रत्यः सगुणवल्लभासहितः[1]।
बहुसंमतश्च वेशे गोष्ठ्या वशगो विटः प्रोक्तः॥ ५१॥
यस्त्वेकदेशविद्यः क्रीडनको भूरिजातविश्वासः।
स स्याद्विदूषकः किल वैहासिकसंज्ञकश्चैव॥ ५२॥
एते वेश्यानामिह नगरसदां चैव मन्त्रिणः कथिताः।
संधौ विग्रहकृत्ये विनियुक्ता आदरेणैव॥ ५३॥
एतेन वृद्धगणिकाः कलाविदग्धास्तथैव भिक्षुक्यः।
मुण्डाश्चैव[2] वृषल्यो व्याख्याताः कामपारगेण॥ ५४॥
ग्रामीणो बहुमानी प्रोत्साह्यान्यान्कुतूहलाविष्टान्।
सुविचक्षणान् सजातानेतद्वृत्तं समाचरेत्तत्र[3]॥ ५५॥
श्रद्धां जनयन् भूयः कुर्वीतैवानुकारमेतस्य।
अनुवर्तयंश्च गोष्ठीमनुरञ्जनमाचरेत्संगे॥ ५६॥
अनुगृह्णीयादन्यान्साहाय्येनोपकारवान्निपुणः।
इत्थं नागरवृत्तं कथितं श्रीवीरभद्रदेवेन॥ ५७॥
भाषासंस्कृतयोरिह रचयत्येकेन यो जनो गोष्ठीम्।
स च न भवेद्बहुमानस्तस्मादुभयं प्रवर्तयतु॥ ५८॥
एवं लोकविरुद्धा गोष्ठी स्वैरविसर्पिणी चैव।
परहिंसनस्वरूपां कुर्वन्निन्द्यो भवेल्लोके॥ ५९॥
लौकिकहृदयसरसया क्रीडामात्रैककार्यया तद्वत्।
सह गच्छन्निह गोष्ठ्यां विद्वान् सिद्धिं समभ्येति॥ ६०॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते।
साधारणेऽधिकरणे रचितोऽध्यायश्चतुर्थोऽसौ॥ ६१॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ प्रथमे
साधारणेऽधिकरणे चतुर्थोऽध्यायः।

---

१ सगुणश्चासौ वल्लभासहितश्चेति समासः, सूत्रे 'गुणवान् सहायः' इति पाठात्। २ 'रण्डा' इति ख.। ३ 'समाचरन्नेतु' क. ग.।

## अथ प्रथमे साधारणाधिकरणे पञ्चमोऽध्यायः ।



अथ तन्यते प्रपञ्चो भूमीतलचक्रवर्तिनाऽनेन ।
श्रीवीरभद्रयूना कामागमपञ्चमेऽध्याये ॥ १ ॥
कामः प्रयुज्यमानो भवति सवर्णासु शास्त्रतश्चैव ।
हेतुः सन्ततियशसोर्लौकिकनामेति वर्णेषु ॥ २ ॥
प्रतिषिद्धोऽस्मादन्यः परपूर्वाश्रेष्ठवर्णयोर्नेयः ।
वेश्यास्वप्रतिषिद्धः शिष्टोऽवरवर्णजायाश्च ॥ ३ ॥
एवमनिरवसितायां पुनर्भुवि स्याचयाऽस्तः कामः ।
अवरापाणिग्रहणं मनुनाऽप्यादिष्टमेवास्ति ॥ ४ ॥
तिस्रोऽत्र नायिकाः किल कन्यावेश्यापुनर्भुवः कथिताः ।
वात्स्यायनस्य केचित्परदारान् कारणादाहुः ॥ ५ ॥
अस्याः स्वैरविहारस्तत्र च हेतुर्निसर्गतः कथितः ।
वेश्यानामिव तासां गमने तादृकृतो दोषः ॥ ६ ॥
नूनं पुनर्भुवामिव गमनं व्याख्यातमेवमेतेन ।
उत्तमवर्णाऽप्येवं नादृश्यात्संगतो दोषम् ॥ ७ ॥
यद्वा स्वपतिममित्रं कुर्यान्मित्रं मयाऽङ्गना भीता ।
त्यक्त्वा मे प्रतिकूलं कुर्यादनुकूलमादरादेषा ॥ ८ ॥
एतद्द्वारा यदि वा हर्त्तैवस्याः पतिं धनोद्यम् ।
आदास्ये धनमेतत्कारणमेवं मनोवृत्तिः ॥ ९ ॥
एषेव वा मदास्यति धनमिति बुद्ध्या प्रवर्तते तस्याम् ।
यदि वा तस्या भीत्या संगमस्याः समाचरति ॥ १० ॥
दोषं मकाशयिष्यति सन्तमसन्तं मया परित्यक्ता ।
संभावितो विनाशो येन ममादूषणस्यापि ॥ ११ ॥
आयतिमन्तं यदि वा वश्यं मत्तो विभिद्य भर्तारम् ।
मदमित्रमित्रभावं गमयेदेषा मया त्यक्ता ॥ १२ ॥
मदमित्रमेव यदि वा कुर्यान्स्ववशे स्फुरन्महाकाशा ।

इत्याद्यैर्भयशोनैः परदारासेवनं कुरुते ॥ १३ ॥
निजदारनिरतदारानुद्धरोपाद्भजेज्जनो नियतम् ।
एतद्द्वारा राजद्वेष्यं हन्तुं तथा यत्नः ॥ १४ ॥
एतद्द्वारा यदि वा काम्यामन्या तु प्राप्स्यामि ।
यदि वाऽमित्रं मित्र द्वारैतस्या विघास्यामि ॥ १५ ॥
इत्येवमादिहेतोः परकान्तामेप सेवते कामी ।
न तु केवलानुरागाद्वात्स्यायनभाषितेनैतत् ॥ १६ ॥
विधवाऽपि पञ्चमी स्यात्सबद्धा या भवेन्महामात्रैः ।
अन्या वेति तु कथयति मतमिह चारायणाचार्यैः ॥ १७ ॥
तामेव प्रव्रजिता सुवर्णनाभोऽथे वच्चयय षष्ठीम् ।
अन्याभुक्ता दुहिता गणिकायाः सप्तमीं दासीम् ॥ १८ ॥
घोटकमुख उपकलयति कुल्युवतिं चोपकारभेदेन ।
कथयति गोनर्दीयो वात्स्यायनसमत नैतत् ॥ १९ ॥
कार्यान्तरस्य विरहादेताः कथिताः पुनश्चतुर्व्वैव ।
तस्माद्वात्स्यायनतस्तासा भेदश्चतुर्थेव ॥ २० ॥
भिन्नत्वात्तु तृतीया प्रकृतिः स्यात्पञ्चमी मते कापि ।
प्रच्छन्नप्रव्यक्तौ द्वावेतौ नायकौ कथितौ ॥ २१ ॥
तौ त्रिविधौ प्रत्येकं श्रेष्ठाधममध्यमैर्गुणाद्भेदैः ।
ते तु गुणा उभयोरपि विज्ञेया वैशिके विशदाः ॥ २२ ॥
कुष्ठिन्युन्मत्ता वा भिन्नरहस्या तथा तु या पतिता ।
या प्रार्थिनी प्रकाशे गतकल्प यौवन यस्याः ॥ २३ ॥
अतिशुभ्राऽप्यतिकृष्णा या च भवेद्दुर्भगा तथा च सखी ।
प्रव्रजिता सबद्धा श्रोत्रियभूमिभुजोर्दाराः ॥ २४ ॥
गम्या नैता लोके कथयति वात्स्यायनो मुनिश्चैनम् ।
यदि पञ्चपुरुषदृष्टास्ता गम्या बाभ्रवीयानाम् ॥ २५ ॥
सबन्धिश्रोत्रियपो राज्ञो दाराश्च तद्विधा नैवम् ।

---

१ 'ऽप्यवर्णयत्' ख. ग. ।

नीचतरं शशकेभ्यो रतमाम्नातं प्रमाणेन ॥ १३ ॥
शशकच्छपतुरगहरिणीवडवाकरिणीषु सक्रमो योगः ।
समरतमक्रमयोगे विषमरतं षड्विधं प्रोक्तम् ॥ १४ ॥
उच्चं पुरुषाधिक्यादाधिक्याद्योषितो भवेन्नीचम् ।
अत्यन्ततद्विवैषम्ये तरशब्दो नेष्यते तत्र ॥ १५ ॥
उच्चतरं नीचतरं व्यवधानाद्योगतः समादिष्टम् ।
तत्र समानि रतानि श्रेष्ठान्युक्तानि सारज्ञैः ॥ १६ ॥
नीचतरोच्चतरे खलु सुरतकनिष्ठे स्मरागमे कथिते ।
नीचोच्चयोः प्रभेदा मध्या वात्स्यायने कथिताः ॥ १७ ॥
अङ्गोचताधमत्वे रतयोस्तादृक्क कारणे यद्वत् ।
तत्साम्येन समत्वं विज्ञेयं तद्वदेवात्र ॥ १८ ॥
आयामैः परिणाहैः षण्नवरसयुग्मकाङ्गुलैः क्रमशः ।
गुह्यैः शशवृषतुरगा हरिणीवडवाकरिण्यश्च ॥ १९ ॥
स्त्रीपुंसयोर्विसृष्टेः शैघ्र्यं दैर्घ्यं तथैव माध्यस्थम् ।
इत्येवं नवधा स्याद्रतमिह भेदेन कालस्य ॥ २० ॥
एवं भावजभेदा विज्ञेया अत्र संप्रयोगस्य ।
सप्ताधिकेह विंशतिराख्याता तस्य संख्यैषा ॥ २१ ॥
मृगवृकरवृषतुरगाः पञ्च पुमांसः सरासभाः क्वापि ।
हरिणी छागी वडवा करिणी करभी च नार्योऽपि ॥ २२ ॥
लक्षणमेषां ज्ञेयं तद्ग्रन्थादेव नात्र वीरभद्रस्य ।
वात्स्यायनीयविहितो निरतस्यास्त्याग्रहः क्वापि ॥ २३ ॥
भावे स्त्रिया विवादः कलयति भावं न सा यथा पुरुषः ।
सातत्यादपनोदः कण्डूतेस्तन्यते यूना ॥ २४ ॥
तस्याः, सा संसृष्टा पुनरभिमानव्रजोद्भवानन्दैः ।
जनयति रसान्तरं यत्तस्मिन्सुखबुद्धिरेतस्याः ॥ २५ ॥
परसुखबुद्धेर्विरहाच्चत्र कथंता न कारणे भवति ।
तस्मादासां भवता भावाभावः कथं प्रमितः ॥ २६ ॥

## अथ द्वितीये सांप्रयोगिकेऽधिकरणे प्रथमोऽध्यायः।



साधारणाधिकरणं प्रथमं श्रीवीरभद्रदेवेन।
व्याख्याय सांप्रयोगिकमधुना निर्णीयते क्रमशः ॥ १ ॥
अथ सांप्रयोगिकस्य प्रथमाध्यायस्य साधु वैशद्ये।
यतते शारदशशधरविशदयशा भूमिपालोऽसौ ॥ २ ॥
अत्र प्रथमेऽध्याये सुरतविशेषा भिदाः प्रीतेः।
आलिङ्गने विचारः कथितस्तत्र द्वितीये तु ॥ ३ ॥
चुम्बनयुजो विकल्पानाहाध्याये द्वितीयतश्चरमे।
नखजातपश्चतुर्थे विषयो दशनच्छिदायास्तु ॥ ४ ॥
सह देश्यैरुपचारैः पञ्चमसंचारचञ्चुराश्चक्रे।
चित्ररतैः सह कथिताः संवेशनसंविधाः षष्ठे ॥ ५ ॥
प्रहणनयोगा युक्ता उदितास्तैश्चेह सीत्कृतारम्भाः।
श्रीवात्स्यायनमुनिना सांयोगिकसप्तमेऽध्याये ॥ ६ ॥
अध्यायेऽष्टमसंज्ञे पुरुषायिततदुपसृप्तके ज्ञेये।
उदितं तथोपरिष्टकमिह नवमे मारविज्ञेन ॥ ७ ॥
सुरतविशेषं कथितं तदुपक्रमकावसानिकं चरमे।
प्रणयकलहपरिणिष्ठितमेवं कथिता दशाध्यायाः ॥ ८ ॥
श्रीवीरभद्रसुकृती स्मरशास्त्रे निर्णयं कुरुते।
एवं कृत्वा संग्रहमध्यायानां द्वितीयस्य ॥ ९ ॥
शशवृषतुरगास्त्रिविधा नायकभेदास्तु लिङ्गतो ज्ञेयाः।
वडवा मृगी च करिणी कथिता इह नायिकास्तिस्रः ॥ १० ॥
शशमृग्योर्वडवाया वृषभेनाश्वस्य संगमश्चेभ्या।
समरतमेतत्त्रितयं निर्दिष्टं मानतो विज्ञैः ॥ ११ ॥
विषमरतानि तु षोढा मृग्या वृषभस्य चाश्वया तुरगः।
उच्चरतद्वयमेतद्द्वयमृग्योरुच्चतोऽप्यधिकम् ॥ १२ ॥
नीच करिणीवृषयोरश्वाशशयोस्तथैव निर्दिष्टम्।

नीचतरं शशकेभ्यो रतमाम्नातं प्रमाणेन ॥ १३ ॥
शशकवृषतुरगहरिणीवडवाकरिणीषु सक्रमो योगः ।
समरतमक्रमयोगे विषमरतं षड्विधं प्रोक्तम् ॥ १४ ॥
उच्चं पुरुषाधिक्यादाधिक्याद्योषितो भवेन्नीचम् ।
अव्यवहितवैषम्ये तरशब्दो नेष्यते तत्र ॥ १५ ॥
उच्चतरं नीचतरं व्यवधानाद्योगतः समादिष्टम् ।
तत्र समानि रतानि श्रेष्ठान्युक्तानि मारज्ञैः ॥ १६ ॥
नीचतरोच्चतरे खलु सुरतकनिष्ठे स्मरागमे कथिते ।
नीचोच्चयोः प्रभेदा मध्या वात्स्यायने कथिताः ॥ १७ ॥
अङ्गोच्चताधमत्वे रतयोस्तादृक्क कारणे यद्वत् ।
तत्साम्येन समत्वं विज्ञेयं तद्वदेवात्र ॥ १८ ॥
आयामैः परिणाहैः षण्नवरसयुग्मकाङ्गुलैः क्रमशः ।
गुह्यैः शशवृषतुरगा हरिणीवडवाकरिण्यश्च ॥ १९ ॥
स्त्रीपुंसयोर्विसृष्टेः शैघ्र्यं दैर्घ्यं तथैव माध्यस्थम् ।
इत्येवं नवधा स्याद्रतमिह भेदेन कालस्य ॥ २० ॥
एवं भावजभेदा विज्ञेया अत्र संप्रयोगस्य ।
सप्ताधिकेह विंशतिराख्याता तस्य संख्यैषा ॥ २१ ॥
मृगवर्करवृषतुरगाः पञ्च पुमांसः सरासभाः क्वापि ।
हरिणी छागी वडवा करिणी करभी च नार्योऽपि ॥ २२ ॥
लक्षणमेषां ज्ञेयं तद्ग्रन्थादेव नात्र वीरभद्रस्य ।
वात्स्यायनीयविहितो निरतस्यास्त्याग्रहः क्वापि ॥ २३ ॥
भावे स्त्रियां विवादः कलयति भावं न सा यथा पुरुषः ।
सान्तरपादपनोदः कण्डूतेस्तन्यते पुंसा ॥ २४ ॥
तस्याः, सा संसृष्टा पुनरभिमानप्रजोद्भवानन्दैः ।
जनयति रसान्तरं यत्तस्मिन्सुखबुद्धिरेतस्याः ॥ २५ ॥
परसुखबुद्धेर्विरहाच्चित्र कथंता न कारणे भवति ।
तस्मादासां भवता भावाभावः कथं प्रमितः ॥ २६ ॥

इति चेद्विरमति पुरुषो भावप्राप्त्या निजेच्छया यस्मात्।
न त्वेवं स्त्रीत्युचैर्निजमतमौद्दालकिः प्राह ॥ २७ ॥
तस्या भावप्राप्तौ तदपेक्षः स्यात् पुमान् स्वतो विरतौ।
स्त्री तु विरत्यां स्पृहयति पुंसो भावाय भावज्ञा ॥ २८ ॥
न तु यदि भावो नासां तस्या रागश्चिरद्रुतौ पुंसि।
शीघ्रद्रुतौ च रोषो भावापेक्षाकृतौ तौ हि ॥ २९ ॥
चिरतो भावप्राप्त्या रज्यन्ते पुंसि तादृशे नार्यः।
शीघ्रद्रुतावलाभाद्वेषो युक्तो मृगाक्षीणाम् ॥ ३० ॥
एतद्भावप्राप्तौ सत्यां येनेह संभवेत्स्त्रीणाम्।
तस्मान्मतमौद्दालकेरमतं प्राहेति कश्चनाचार्यः ॥ ३१ ॥
चिरकण्डूतिनिवारणमिष्टमनिष्टं तदल्पकालेन।
भावं साधयतोऽतो नैताविति तन्मते निरताः ॥ ३२ ॥
कण्डूतेरपनोदे भावप्राप्तौ च तुल्यतैतस्य।
हेतोरिति संदिग्धव्याप्तिरसौ भावयोगेन ॥ ३३ ॥
अभिमानैरभियुक्ते सुखमित्यभिधा प्रयुज्यते लोके।
तस्मात्कण्डूनाशे सञ्जाते वल्लभासङ्गात् ॥ ३४ ॥
कण्डूदुःखाभावे सुखमिति बुद्धिर्मृगायताक्षीणाम्।
भारापगम इवास्ते सुखिनो वयमित्यधीराणाम् ॥ ३५ ॥
मतमिदमपरिच्छेद्यं स्वल्पमतीनां विविच्य यत्नेन।
श्रीवीरभद्रसुकृती स्वकृतावौद्दालिकेनाह ॥ ३६ ॥
सातत्यादारम्भात्प्रभृति मृगाक्षीषु जायते भावः।
प्रान्ते तु नायकानामनृतौ तासां न गर्भः स्यात् ॥ ३७ ॥
इत्युपपत्त्या प्राहुर्मतमुपपन्नं तु बाभ्रवीयस्य।
साऽपि समधिगतभावा पुरुषं नोपक्षते विरतौ ॥ ३८ ॥
ननु सततेऽस्या भावे स्यादारम्भे न चित्तमाध्यस्थ्यम्।
असहिष्णुत्वं च यथा रागविवृद्धिः क्रमादपि च ॥ ३९ ॥
अनपेक्षत्वं च तथा वपुषो विरतावपेक्षणं चान्ते।

इति चेन्न तुल्यताया मन्दामन्दत्वयोर्दृष्टे ॥ ४० ॥
संस्कारे किल सदृशे भ्रान्तेश्चक्रस्य कुम्भनिर्मातुः ।
भ्रान्तावेव निवसतो दृष्टौ मन्दाधिकौ वेगौ ॥ ४१ ॥
चक्रभ्रमणेनैव व्याख्यातं भ्रमणमत्र चान्यस्य ।
वेगैकत्वभिदोरिह चिन्ता व्यर्थाऽक्षते साम्ये ॥ ४२ ॥
अन्ते विरतेरीप्सां प्रति हेतुर्धातुसंक्षयः प्रोक्तः ।
तस्माद्भावोत्पत्तिर्नार्या अपि नायकस्येव ॥ ४३ ॥
प्रत्युत नार्याः सततं सुरतं प्रान्ते तु जायते पुंसः ।
तस्माद्भावाधिक्यं भामिन्यां भावयेद्युक्त्या ॥ ४४ ॥
सदृशाकृतावभिन्ने कस्मादर्थे प्रवृत्तयोर्यूनोः ।
वैलक्षण्यं कार्ये नैषा शङ्का चमत्कृत्यै ॥ ४५ ॥
वैलक्षण्यमुपाये स्यादभिमाने च कारणं तत्र ।
वैलक्षण्यमुपाये सर्गात्मव्यक्तमेवात्र ॥ ४६ ॥
सर्गः स्वभावभेदः कर्त्राधारौ स्वभावतो भिन्नौ ।
भिन्नस्वभावयोगाद्यदि वा सर्गः क्रियासर्गः ॥ ४७ ॥
कर्ता पुमान्क्रियायां प्रतिपन्नो भवति येन रूपेण ।
नारी ततोऽन्यथाऽस्यामाधारीभूय संयतते ॥ ४८ ॥
यदि वा धातुविसर्गः सर्गस्तस्मादिह द्वयोर्भेदः ।
कर्ता पुमानमुष्मिन्नाधारो नायिका भोक्ता ॥ ४९ ॥
भेदकतयाऽवसेयः कर्तुरिहाधारतोऽथवा युक्त्या ।
लक्षणसर्गासर्गैर्भिन्नौ तौ ग्रन्थतः प्रथितौ ॥ ५० ॥
यद्वा सर्गात्सृष्टेरारभ्याधारतः परः कर्ता ।
इति कथिताः सर्गार्थाः विदुषा श्रीवीरभद्रेण ॥ ५१ ॥
वैलक्षण्यमुपाये स्यादभिमानेऽपि कारणं तस्य ।
अहमभियोक्तेति पुमानभियुक्तेति प्रवर्तते नारी ॥ ५२ ॥
नत्वनयोरिह भेदादत्यन्तं किं न भिद्यते कार्यम् ।

---

१ ' बाणस्य ' ख. ।

लक्षणभेदाद्भिन्नौ तौ न तु कार्यस्य तद्भेदः ॥ ५३ ॥
आत्यन्तिके तु भेदे कारणभेदः प्रयोजको नैव।
स्यादाकृतेरभेदादात्यन्तिकभेदवैधुर्यम् ॥ ५४ ॥
नन्वेवं स्याद्भेदः प्रकृते कार्ये न कश्चनापीह।
एकार्थस्योत्पत्तौ कारकसंघातसंदृष्टेः ॥ ५५ ॥
इह तु पृथङ्निजकार्ये भिन्ने हेतुत्वमेतयोरुभयोः।
सहकारित्वं तस्माद्यूनोर्युक्तं कथं भवतु ॥ ५६ ॥
इति चेन्न दृश्यते खलु कार्यविभेदोऽपि संहतौ हेत्वोः।
मेषादेरिह युद्धे न ह्यभिघातस्तयोरेकः ॥ ५७ ॥
उभयोः सहकारित्वादस्ति तयोरेकजातितश्चैक्यम्।
तद्वन्मल्लादीनामभिघातेऽपीष्यते सुलभम् ॥ ५८ ॥
ननु मल्लादेर्युद्धे कारकभेदप्रथा तथा नास्ति।
अस्ति तु सुरते तस्मादास्तामात्यन्तिको भेदः ॥ ५९ ॥
इति चेन्न केनचित्खलु रूपेणेहापि वस्तुनोरैक्यम्।
आत्यन्तिकस्त्वभेदो मल्लादौ दृश्यते नैव ॥ ६० ॥
नन्वैक्ये पूर्वोक्ता भेदनिरुक्तिर्विरुध्यते नैवम्।
सर्गाद्भेदोक्तावपि रूपाभेदस्य युक्तत्वात् ॥ ६१ ॥
आत्यन्तिको हि भेदो यूनोः सुखयोस्तु नेष्यते तस्मात्।
सादृश्यप्रतिपत्तेः सिद्धत्वात्सर्वलोकेषु ॥ ६२ ॥
एकार्थार्थिः संगो दम्पत्योरस्ति युक्तितः साम्यम्।
वल्लभ इव वनिताऽपि हि सदृशं सुखमश्नुते तस्मात् ॥ ६३ ॥
एवं तथोपचार्या योषित्पुरुषेण यत्नतः सम्यक्।
येनाप्नुयाद्रतिं सा केन स्यादन्यथा निरता ॥ ६४ ॥
न च सादृश्यमसिद्धं दम्पत्योर्नापि तज्जयोः सुखयोः।
*तस्माद्रतस्य भेदः सिद्धः कालार्पितो नवधा ॥ ६५ ॥*
काममतेन विचारात्सह च समाध्या बुधेन निर्णीताः।

---

१ 'एतत्' इति 'यत्तत्' इति च पाठान्तरम्।

लक्षणभेदाद्भिन्नौ तौ न तु कार्यस्य तद्भेदः ॥ ५३ ॥
आत्यन्तिके तु भेदे कारणभेदः प्रयोजको नैव ।
स्यादाकृतेरभेदादात्यन्तिकभेदवैधुर्यम् ॥ ५४ ॥
नन्वेवं स्याद्भेदः प्रकृते कार्ये न कश्चनापीह ।
एकार्थस्योत्पत्तौ कारकसंघातसंदृष्टेः ॥ ५५ ॥
इह तु पृथङ्निजकार्ये भिन्ने हेतुत्वमेतयोरुभयोः ।
सहकारित्वं तस्माद्यूनोर्युक्तं कथं भवतु ॥ ५६ ॥
इति चेन्न दृश्यते खलु कार्यविभेदोऽपि संहतौ हेत्वोः ।
मेषादेरिह युद्धे न ह्यभिघातस्तयोरेकः ॥ ५७ ॥
उभयोः सहकारित्वादस्ति तयोरेकजातितश्चैक्यम् ।
तद्वन्मल्लादीनामभिघातेऽपीक्ष्यते सुलभम् ॥ ५८ ॥
ननु मल्लादेर्युद्धे कारकभेदस्तथा तथा नास्ति ।
अस्ति तु सुरते तस्मादास्तामात्यन्तिको भेदः ॥ ५९ ॥
इति चेन्न केनचित्खलु रूपेणेहापि वस्तुनोरैक्यम् ।
आत्यन्तिकस्त्वभेदो मल्लादौ दृश्यते नैव ॥ ६० ॥
नन्वैक्ये पूर्वोक्ता भेदनिरुक्तिर्विरुध्यते नैवम् ।
सर्गाद्भिदोक्तावपि रूपाभेदस्य युक्तत्वात् ॥ ६१ ॥
आत्यन्तिको हि भेदो यूनोः सुखयोस्तु नेष्यते तस्मात् ।
सादृश्यप्रतिपत्तेः सिद्धत्वात्सर्वलोकेषु ॥ ६२ ॥
एकार्थार्थिः संगो दम्पत्योरस्ति युक्तितः साम्यम् ।
वल्लभ इव वनिताऽपि हि सदृशं सुखमश्नुते तस्मात् ॥ ६३ ॥
एवं तथोपचार्या योषित्पुरुषेण यत्नतः सम्यक् ।
येनाप्नुयाद्रतिं सा केन स्यादन्यथा निरता ॥ ६४ ॥
न च सादृश्यप्रसिद्धं दम्पत्योर्नापि तज्जयोः सुखयोः ।
तस्माद्रतस्य भेदः सिद्धः कालार्पितो नवधा ॥ ६५ ॥
कामपतेन विचारात्सह च समाध्या बुधेन निर्णीताः ।

१ 'एतत्' इति 'यत्तत्' इति च पाठान्तरम् ।

रसरागभाववेगाः प्रीतिरती सप्त पर्यायाः ॥ ६६ ॥
मोहनशयने कथिते तुल्यार्थे संप्रयोगरतशब्दौ ।
सहितौ रहःपदेन तुल्यार्थावत्र निर्दिष्टौ ॥ ६७ ॥
उक्तविभेदरतानां सांकर्ये भूयसी भवेत्संख्या ।
तेषु भवन्त्युपचाराः तर्काद्वात्स्यायनाभिमताः ॥ ६८ ॥
वेगश्चण्डः प्रथमे पुरुषस्य रतेऽथ शीघ्रकालत्वम् ।
उत्तररतेष्वतोऽन्यद्योषिद्विपरीतमेतत्तु ॥ ६९ ॥
आधातुक्षयमासां तदुच्यते धातुसंक्षयः पूर्वम् ।
पुंसां स्त्रीणां पश्चाद्वादोऽसौ प्रायिको लोके ॥ ७० ॥
रतभेदानभिधाय प्रीतिविशेषान्निरूपयामोऽत्र ।
आशु भवन्ति मृगाक्ष्याः प्रीतय इत्याहुराचार्याः ॥ ७१ ॥
उपमर्द्यत्वमृदुत्वे कोऽपि निसर्गजश्च योषितामाशु ।
प्रीतिप्राप्तौ हेतुर्विख्यातः कामशास्त्रेषु ॥ ७२ ॥
एतावतैव गदितो निपुणमतीनामिहैव संबोधः ।
मन्दमतेरवबोधो विस्तरतो रच्यते तदनु ॥ ७३ ॥
अभिमानविषयजातैः संप्रत्ययतस्तथैव चाभ्यासात् ।
प्रीतिश्चतुर्विधैवं लक्षणमासां तु भेदाय ॥ ७४ ॥
ब्रूमः कर्माभ्यासान्मृगयादिषु या च कर्मसु प्रीतिः ।
बहिरिह शब्दादिभ्यः सा ज्ञेयाऽऽभ्यासिकी लोकैः ॥ ७५ ॥
याऽनभ्यस्ते कर्मणि पूर्वं विषयस्वरूपतो भिन्ना ।
संकल्पोत्था प्रीतिर्ज्ञेया सा चाभिमानेन ॥ ७६ ॥
सा चौपरिष्टके स्यात्स्त्रीणामथवा तृतीयकप्रकृतेः ।
एवं च चुम्बनादिषु विज्ञेया कर्मसु प्रकटम् ॥ ७७ ॥
अन्यस्मिन्नन्योऽयं यत्र च भवतीह कारणं प्रीतेः ।
तन्त्रज्ञैः सा कथिता संप्रत्ययलक्षणा प्रीतिः ॥ ७८ ॥
शब्दादिविषयजाता या प्रत्यक्षाऽस्ति लोकतः सिद्धा ।
प्रीतिः सा विषयोत्था कथिता तज्ज्ञैश्चतुर्थीयम् ॥ ७९ ॥

एतत्प्रीतौ हेतुः प्रीतिपदेनाभिधीयते कस्मात् ।
इति चेन्न लक्षणायाः शक्तेरिव तत्र बीजत्वात् ॥ ८० ॥
सम्बन्धोऽत्र च बीजं तादर्थ्ये तच्च तत्फले शक्तिः ।
एवं चतुर्विधैषा प्रीतिर्मुख्याऽधिका नैव ॥ ८१ ॥
एता ज्ञात्वा प्रीतीः कारणभेदेन शास्त्रतो भिन्नाः ।
अभिवाञ्छन्नभिवृद्धिं कारणवृद्धिं समातनुयात् ॥ ८२ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
सांयोगिकेऽधिकरणे प्रथमोऽध्यायः कृतः साङ्गः ॥ ८३ ॥

इति श्रीवीरभद्रविरचिते कन्दर्पचूडामणौ द्वितीये सांप्रयोगिकेऽधिकरणे प्रथमोऽध्यायः ।

---

## अथ द्वितीये सांप्रयोगिकेऽधिकरणे द्वितीयोऽध्यायः ।



एतद्द्वितीयमधुनाऽध्यायं व्याख्यातदोर्द्वयः समरे ।
व्याख्याति वीरभद्रो भद्रतरो राजवर्गेषु ॥ १ ॥
अष्टविकल्पा अष्टावालिङ्गनचुम्बनादयः कथिताः ।
अष्टाष्टतैकतायां भवति चतुःषष्टिरित्येके ॥ २ ॥
प्रायोवादं कथयति भेदाधिक्यात्तथाऽस्यतावशतः ।
चित्ररतादिनिवेशात्सूत्रे वात्स्यायनाचार्यः ॥ ३ ॥
वलिपञ्चवर्णतावत्सप्तच्छदतामयोगवद्वृक्षे ।
असमशरागमवेत्ता प्रकृतचतुःषष्टिशब्दस्य ॥ ४ ॥
तावत्योऽस्मिञ्छास्त्रे प्रकरणसंख्यास्ततश्चतुःषष्टिः ।
इत्येके आचार्या आहुस्तोऽन्येऽन्यथा प्राहुः ॥ ५ ॥

---

१ आलिङ्गनचुम्बननखच्छेद्यदशनच्छेद्यसंवेशनसीत्कृतपुरुषायितौपरिष्टकानामष्टानामष्टधाविकल्पभेदादष्टावष्टकाश्चतुःषष्टिरिति बाभ्रवीयाः । ( का० सू० अ० २ अ० २ सू० ५ ) ।

तावत्संख्या गदिताः कला इहाङ्गं हि संप्रयोगस्य ।
इति मतमेषामुदितं विदुषा श्रीवीरभद्रेण ॥ ६ ॥
असमागतयोः प्रीतौ लिङ्गस्य द्योतनं समुद्दिश्य ।
आलिङ्गनं चतुर्विधमुक्तं बाह्ये रते प्रथमम् ॥ ७ ॥
तत्र स्पृष्टकमाद्यं विद्धकमुक्तं ततः पुनः परतः ।
उद्घृष्टकपीडितके ततः परेऽन्वर्थता चैषाम् ॥ ८ ॥
स्थितमुपविष्टं यदि वा विजने प्रिया हृदा समुद्दिश्य ।
विध्येत्कुचेन किञ्चिन्मृगनयना गृह्णती वस्तु ॥ ९ ॥
तामवपीड्य युवाऽपि च गृह्णीयाद्विद्धकं भवेदेतत् ।
अनतिप्रवृत्तवचसोरुभयविधं कथ्यते चैतत् ॥ १० ॥
जनसंबाधे तिमिरे विगतजने वाऽथ गच्छतोः शनकैः ।
अङ्गानां विनिघृष्टिर्निगदितमुद्घृष्टकं विबुधैः ॥ ११ ॥
कुड्यादौ पीडनतः पीडितकं तच्च कथ्यते विबुधैः ।
द्विविधमिदं ज्ञातायामन्योन्यस्याकृतौ भवति ॥ १२ ॥
चत्वारि संप्रयोगे शालं लतिकेव सम्यगावेष्ट्य ।
पतिमवनमयति चुम्बितुमस्य मुखाम्भोरुहं यदि वा ॥ १३ ॥
उद्धृत्य मन्दसीत्कृतरुचिरा तत्र प्रतिष्ठितं किमपि ।
रमणीयकं पश्यति भवति लतावेष्टितं तत्तु ॥ १४ ॥
चरणेन चरणमादायाक्रम्यान्येन योरुमेतस्य ।
आवेष्ट्य चैकबाहुं पृष्ठेंऽसं चावनम्यैव ॥ १५ ॥

---

१ स्पृष्टकलक्षणमत्र नोक्तं, तत्सूत्रादुद्धृत्य लिख्यते—'संमुखागतायां प्रयोज्यायामन्यापदेशेन गच्छतो गात्रेण गात्रस्य स्पर्शनं स्पृष्टकम्' । ( का०सू० अ० २ अ० २ सू० ९ ) २ 'तदेव कुड्यसंदंशेन स्तम्भसंदंशेन वा स्फुटकमवपीडयेदिति पीडितकम्' ( का० सू० अ० २ अ० २ सू० १३ ) । 'तदेव उद्घृष्टकं पीडितकं भवति, कथमित्याह कुड्यसंदंशेनेति । संदंश उभयतो ग्रहणं अर्थादितो नायकः परत. कुड्यं स्तम्भो वा, तेन स्फुटकं दृढमवपीडिते सति पीडितकम्' जयमङ्गला ।

भुजशुभलतयाऽपरया रचितान्तःस्वल्पकूजितश्वसिता ।
यच्चुम्बितुमधिरोहति कथितं वृक्षाधिरूढं तत् ॥ १६ ॥
एतद्द्वितयमुदाहृतमूर्धस्थितकर्म कामकर्मज्ञैः ।
अधुना तिलतण्डुलकं लक्षणतः कथ्यते ज्ञात्वा ॥ १७ ॥
बाह्वोरूर्वोरथवा व्यत्यासाद्यत्र सस्वजाते तत् ।
उदितं शयनस्थितयोरनिसंघट्टनेन तद्विज्ञैः ॥ १८ ॥
रागान्धावनपेक्षितविगमौ वपुषो यदा स्फुटं कुरुतः ।
आलिङ्गनं तदुक्त क्षीरजलं कामशास्त्रेषु ॥ १९ ॥
उत्सङ्गेऽनुगतायामथवा शयने निजाभिमुख्येन ।
यत्रोद्भटतररागावनपेक्षितविग्रहापगमौ ॥ २० ॥
अन्योन्यं प्रविशत इव क्षीरजलं तन्निगद्यते विबुधैः ।
रागक्षणे तदुभयं, चत्वारो बाभ्रवीयानाम् ॥ २१ ॥
ऊरूपगूहनं स्यात्सर्वप्राणं निपीडयेद्यत्तत् ।
तत्संदंशादूरू यदि वोरु कस्यचित्पक्षे ॥ २२ ॥
प्रविकीर्णकेशहस्ता कृत्वा जघनेन जघनदृढयोगम् ।
नखरदशनाभिघाते चुम्बनमथवा समुद्दिश्य ॥ २३ ॥
उल्लङ्घयेदुपरि यत्तत्खलु जघनोपगूहनं कथितम् ।
कुचयुग्मकेन वक्षसि संविष्टाऽऽवेशयेद्भारम् ॥ २४ ॥
तत्रैव तन्निरुक्तं स्तनयुगलाम्भोजगूहनं विबुधैः ।
प्रोक्ता ललाटिकाऽसौ हन्याद्भालस्थलं तेन ॥ २५ ॥
विनिधाय वक्त्रकमले वक्त्रं नयने दृगब्जयोर्यत्र ।
एकाङ्गालिङ्गनमिदमुक्तमिहोर्वादि कुत्रापि ॥ २६ ॥
सवाहनमुपगूहनभेदं कथयन्ति केचनाचार्याः ।

---

१ तत्संदंशादिति ऊरुसंदंशात् । 'तयोरूसंदंशेनैकोरुमूरुद्वय वा सर्वप्राण पीडयेदित्यूरूपगूहनम्' (सू २४)। २ 'स्तनाभ्यामुर प्रविश्य तत्रैव भारमारोपयेदिति स्तनालिङ्गनम्'। (सू० २६) ३ 'मुखे मुखमासज्याक्षिणी अक्ष्णोर्ललाटेन ललाटमाहन्यात्सा ललाटिका'। (सू० २७)।

संस्पर्शत्वात्काले भेदादेवं फले चैव ॥ २७ ॥
साधारण्यवियोगादालिङ्गनतः पृथक्तया मनुते ।
संवाहनं स्मरागमवेत्ता वात्स्यायनाचार्यः ॥ २८ ॥
आकर्णयन्ति ये वा ये वा कथयन्ति ये च पृच्छन्ति ।
आलिङ्गनविधिमखिलं भवति रिरंसा परा तेषाम् ॥ २९ ॥
अन्येऽपि रागसक्ताः सयोगा ये ह्यमूनितास्तेऽपि ।
आदरतोऽत्र विज्ञेयाः नित्यं सांयोगिके कृत्ये ॥ ३० ॥
तावच्छास्त्रक्रमयोर्लोके भूयानिहादरो भवति ।
यावन्मन्दरसाना नैव नराणा रतिप्रचयः ॥ ३१ ॥
रागामृतप्रवाहे पतिततया ये पुनः पराधीनाः ।
तेषा शास्त्रक्रमयोस्तद्योरारोहणं कुत्र ॥ ३२ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
सांयोगिकेऽधिकरणे रचितोऽध्यायो द्वितीयोऽसौ ॥ ३३ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ द्वितीये साम्प्रयो-
गिकेऽधिकरणे तृतीयोऽध्याय ।

---

## अथ द्वितीये सांप्रयोगिकेऽधिकरणे तृतीयोऽध्यायः ।



अधुना तृतीयमर्थं योजयितुं जातनिर्भरोद्योगः ।
जयति जितारिवधूजनगीतयशा वीरभद्रोऽसौ ॥ १ ॥
नेष्टं पौर्वापर्यं चुम्बननखदशनकर्मणा शास्त्रे ।
युगपद्वा क्रमतो वा जायन्ते रागयोगेन ॥ २ ॥
संयोगात्प्रागेषा प्राधान्येन प्रयोगस्तु ।
प्रहणनसीत्कृतियोगाः संयोगे केचिदित्याहुः ॥ ३ ॥
सर्वं सर्वत्र भवेद्रागस्यापेक्षितत्वतस्तत्त्वम् ।
वात्स्यायन इति कथयति तत्र खलु विकल्पो रतारम्भे ॥ ४ ॥

अव्यक्तित्वरितत्वे रागस्यैवं स्वभावमर्यादा।
अत्वरितत्वं व्यक्तिः समुच्चयश्चाम्रतः प्रोक्तः ॥ ५ ॥
संधुक्षणमेवं सति रागकृशानोस्तदिन्धनैर्भवति।
अधुना विविच्य कथयति चुम्बनदेशान् स्मरस्मेरः ॥ ६ ॥
ओष्ठान्तर्वक्त्रकक्षाः वक्षस्तनभालदेशगलगण्डाः।
नाभेर्मूले संधावूर्वोरपि लाटजातानाम् ॥ ७ ॥
रागवशादेशवशादेशाः केचिच्च चुम्बने गदिताः।
सर्वजनानां नैवं वात्स्यायनभाषितेनैतत् ॥ ८ ॥
कन्याचुम्बनमुक्तं निमितं स्फुरितं तथा च घट्टितकम्।
तत्र बलेन नियुक्ता वदने वदनं यदा धत्ते ॥ ९ ॥
निश्चेष्टा तत्कथितं निमितं, वदने प्रवेशितं चोष्ठम्।
निजमोष्ठं स्पन्दयति ग्रहीतुमस्तोत्तरा चैव ॥ १० ॥
एतत्स्फुरितकमाहुः, किञ्चित्परिगृह्य जिह्वयाऽग्रेण।
घट्टयति मीलिताक्षी नयनावृतिकृत्कराब्जेन ॥ ११ ॥
घट्टितकं कथितं तत्, सममथ तिर्यक्तथैव चोद्भ्रान्तम्।
पीडितमवपीडितमिति पश्चाऽधरचुम्बनं प्रोक्तम् ॥ १२ ॥
आदायाङ्गुलिपुटतो यत्रोष्ठं चारु जिह्वयाऽग्रेण।
घट्टयति निर्दशनतः पीडनतः पञ्चमं प्रोक्तम् ॥ १३ ॥
न तु लक्षणमन्येषां कथितं श्रीवीरभद्रदेवेन।
वात्स्यायनसूत्राणामेव व्याख्या यतः कार्या ॥ १४ ॥
द्यूतं प्रवर्तयेदिह जितमेतत्स्यात्पुरोष्ठपातेन।
इति पणबन्धपुरःसरमत्र जिताया इदं कार्यम् ॥ १५ ॥

---

१ 'रागादेवं' इति पाठान्तरम्। २ ऊर्वोः सन्धौ वङ्क्षणे। नाभिमूलं वराङ्गं, अपिशब्दात् बाहुमूले, कक्षायां, 'ऊरुसन्धिबाहुनाभिमूलेषु लाटानां' इति सूत्रस्मरणात्। ३ 'रागवशाद्देशवशाच्च सन्ति तानि तानि स्थानानि, न तु सर्वजनप्रयोज्यानीति वात्स्यायन'। (सू. ८) ४ निर्दशनत इति दशनव्यापारं विना।

सास्रविलोचनकपला धुनुयादेषा कराम्बुजे सहसा ।
प्रणुदेदथ च दशेदपि तरसा परिवर्तयेच्चैव ॥ १६ ॥
बलतो हृते च विवदेद्‌द्वयो द्यूतं प्रवर्तयेत्सपणम् ।
आयासं द्विगुणं सा तत्र जिता दर्शयेदेवम् ॥ १७ ॥
दशनान्तर्गतमधरं कृत्वा विश्रब्धमत्तयोरपि च ।
क्रोशेद्विहसेत्तर्जनमादरतश्चाचरेदेषा ॥ १८ ॥
विचलन्नयनमुखाब्जा नर्तितसद्भ्रूलतालसत्सुषमा ।
प्रहसन्ती शनकैरथ कथयेद्वाच्यानि रम्याणि ॥ १९ ॥
प्रहणननखदशनाहतिकलहा द्यूतेऽमुनैव संकथिताः ।
एषां प्रयोगयोगो वेगाधिक्ये भवेद्यूनोः ॥ २० ॥
सात्म्यादप्यथ कार्यश्चुम्बन्त्यामेव चाम्बुजास्यायाम् ।
उपरितनौष्ठग्रहणे रागप्रदमुत्तरौष्ठं स्यात् ॥ २१ ॥
ओष्ठाभ्यां संदंशादवगृह्यौष्ठौ च चुम्बयेद्यत्र ।
संपुटकं तत्स्त्रीणां व्यञ्जनरहितस्य पुंसोऽपि ॥ २२ ॥
इतरोऽपि तत्र तस्या दशनं जिह्वाग्रतः सुखाद्घट्टयेत् ।
तालुगतां वा जिह्वामथवा जिह्वाद्वयं वापि ॥ २३ ॥
दानग्रहणे कथिते बलतो वदनाम्बुजन्मनोऽप्यस्मात् ।
स्थानविशेषाच्छेषे चुम्बनदेशे चतुर्धा तत् ॥ २४ ॥
समपीडितमृदुभेदादञ्चितमहितात्मकीर्तितान्वर्थात् ।
इति विस्तरतः कथितं चुम्बनमधरस्य चान्यस्य ॥ २५ ॥
सुप्तस्य वदनविनिहितदृष्टेर्यच्चुम्बनं भवेत्स्वरसात् ।
तद्रागदीपनाख्याविख्यातं कामशास्त्रेषु ॥ २६ ॥

---

१ 'आवयोः परस्परं चुम्बतोर्येन पुरा प्रथमत ओष्ठपातेन अधरस्य ग्रहणं कृतं तेन जितं' इत्येवंरूपं पणं कुर्यात् । २ एतच्च जिह्वायुद्धमिति प्रसिद्धं, तस्मिन्नितरोऽपि जिह्वयाऽन्या दशनानि घट्टयेत्तालु जिह्वां चेति जिह्वायुद्धम्' (का० सू० अ० २ अ० ३ सू० २२)।

अनवहितविवदमानौ स्वप्नाभिमुखोऽथ वाऽन्यतोऽभिमुखः ।
एते निद्राहतये चुम्ब्यन्ते तद्भवेच्छलितम् ॥ २७ ॥
शयने यदा प्रसुप्तां चिरकालागतः पुरुषः ।
चुम्बति तदा निरुक्तं शास्त्रेऽस्मिन् प्रातिबोधिकं विज्ञैः ॥ २८ ॥
संलक्ष्येहागमने कालं संमानकामना तरला ।
सा स्याच्छलप्रसुप्ता जिज्ञासुर्वाऽस्य भावस्य ॥ २९ ॥
आकारदर्शनार्थं विषमशराकारचुम्बनाकारः ।
आदर्शादौ छायां परिचुम्बति नायकः सुतनोः ॥ ३० ॥
बालस्य प्रतिमायाश्चुम्बनमथ चित्रकर्मणः प्रोक्तम् ।
आलिङ्गनं च लोके संक्रान्तकमत्र मारज्ञैः ॥ ३१ ॥
प्रेक्षणके निशि यदि वा स्वजनसमाजे समीपयातस्य ।
हस्ताङ्गुलिपरिचुम्बनमिह विज्ञेयं प्रयोज्यायाः ॥ ३२ ॥
संविष्टस्य पदाङ्गुलिचुम्बनकमेवमेव विज्ञेयम् ।
नायककामा कुरुते निद्राव्याजेन तस्योरौ ॥ ३३ ॥
संवाहिकाविधानं वदनसुधांशोर्यदा तदा कथितम् ।
चुम्बनमूरुपदोत्तरमङ्ग्यङ्गुष्ठस्य चैवं स्यात् ॥ ३४ ॥
इति चुम्बनानि कतिचित्कथितान्येवाभियोगिकानीह ।
एवं चुम्बनभेदा विज्ञेयाः कामशास्त्रेण ॥ ३५ ॥
कुर्यात्कृते प्रतिकृतं प्रतिताडितमाचरेत्तथा तन्त्रे ।
चुम्बितके प्रतिचुम्बनमिह करणेनाचरेत्तेन ॥ ३६ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
सांयोगिकेऽधिकरणे रचितोऽध्यायस्तृतीयोऽसौ ॥ ३७ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ द्वितीये
सांप्रयोगिकेऽधिकरणे तृतीयोऽध्यायः ।

---

१ 'प्रमत्तस्य विदमानस्य वाऽन्यतोऽभिमुखस्य सुप्ताभिमुखस्य वा निद्राव्याघातार्थं छलितकं' इति सूत्रे पाठः । २ तन्त्रेति ताडिते ।

## अथ द्वितीये सांप्रयोगिकेऽधिकरणे चतुर्थोऽध्यायः ।



अथ यतते ऽध्यायेऽसौ सार्थकतायै चतुर्थतामाजि ॥
यस्य वदान्यतयाऽन्यः सदृशः कल्पद्रुमान्नास्ति ॥ १ ॥
अथ कथयति नखभेदान्कथितान्वात्स्यायनीयसूत्रेण ।
आलिङ्गनप्रभेदान् चुम्बनभेदान् विनिर्णीय ॥ २ ॥
संघर्षात्मकमुक्तं रागाधिक्ये विलेखनं नखतः ।
प्रथमसमागमसमयः समयस्तस्यादिमः प्रोक्तः ॥ ३ ॥
गमनप्रत्यागमयो रोषापगमे तथा प्रमादे च ।
नित्यमचण्डे वेगे यूनोरेतन्न संभवति ॥ ४ ॥
एते नखहृतिसमयाः समयादसमेषुशासनानुसृतेः ।
एवं दशनच्छेद्यं सात्म्यवशान्नान्यदाऽप्युभयम् ॥ ५ ॥
निर्दिष्टमष्टभेदं छुरितकमर्धेन्दुमण्डले रेखा ।
व्याघ्रनखं शशकप्लुतमुत्पलपत्रं तथैवान्यत् ॥ ६ ॥
ज्ञेयं मयूरपदकं स्थानान्येषामतः परं ब्रूमः ।
कक्षौ स्तनशैलावथ जघनं चोरू गलः पृष्ठम् ॥ ७ ॥
एतद्रागात्पूर्वं रागाधिक्ये तु लीलया वृत्ते ।
न स्थानस्य गवेषणमित्येके प्राहुराचार्याः ॥ ८ ॥
वामे हस्ते सर्वे द्वित्रा वा स्युर्नखाः स्फुरच्छिखराः ।
चण्डे वेगे यूनोः सात्म्ये वा तद्विनिर्दिष्टम् ॥ ९ ॥
उज्ज्वलताऽमलिनत्वे वर्धिष्णुत्वं तथा मृदोर्भावः ।
नखरगुणा इत्याद्यास्तेषां विरहः स्फुटो दोषः ॥ १० ॥
दीर्घाणि हस्तशोभां कुर्वाणानीह गौडजातानाम् ।
आलोकनेन सुदृशां चित्तग्राहीणि जायन्ते ॥ ११ ॥
ह्रस्वैस्तु दाक्षिणात्याः कर्मसहिष्णुत्वभाजिभिर्नखरैः ।
स्वेच्छावशाद्विकल्पे कामिभिरुद्दीपका मदने ॥ १२ ॥
मध्यान्युभयगुणानि तु कलयन्त्येतानि ते महाराष्ट्राः ।

उभयविधत्वादेषामुभयगुणत्वं भवेदुचितम् ॥ १३ ॥
सुष्ठु नियमितैरेतैर्हनुदेशे वा कुचाम्बुजद्वितये ।
अधरे वा स्फुटरेखं लघुकरणं संगमात्रेण ॥ १४ ॥
पुलकोद्गमनसमर्थं शान्तेऽन्योन्यं तथा च सङ्घर्षात् ।
परिवर्धमानशब्दादाच्छुरितं कथ्यते विबुधैः ॥ १५ ॥
आच्छुरितकं प्रयोज्यं मूर्ध्नि कण्डूयने तथाऽङ्गस्य ।
संवाहनादिकर्मणि तद्वदिदं व्याकुलीकरणे ॥ १६ ॥
नखपदनिवेशनं यद्वक्रं स्यादर्धचन्द्रकं तदिदम् ।
स्थानममुष्य तु कुचयोः पृष्ठं ग्रीवा तथा प्रोक्ता ॥ १७ ॥
अन्योन्याभिमुखत्वे मण्डलकं स्यान्नखाङ्कयोरुभयोः ।
स्थानममुष्य निगदितं नाभीमूलादि शास्त्रज्ञैः ॥ १८ ॥
दीर्घा क्रियते रेखा नखरेण नापनेया तु ।
अस्याः स्थानं सर्वं कामागमपारगैः[१] कथितम् ॥ १९ ॥
वक्रा भवति तु रेखा व्याघ्रनखं सर्वदेशगं भाग्यत् ।
सकलनखाग्रविरचिताश्चूचुकसामुख्यसौभाग्याः ॥ २० ॥
ज्ञेया मयूरपदकं, चूचुकसान्निध्यशोभनाः पञ्च ।
नखराघाताः प्रोक्ताः शशकप्लुतसञ्ज्ञया लोके ॥ २१ ॥
स्तनपृष्ठे यदि वोर्वोर्देशान्तरयानवाञ्छया तरलः ।
कुर्यात्संहतरेखाः स्मृतये तिस्रश्चतस्रो वा ॥ २२ ॥
अन्याकृतीरपि तथा कुर्याद्रेखा नखोद्भवास्तरुणाः ।
कौशलविधयोऽनन्ता[३] सर्गे धातोस्तथा कृतयः ॥ २३ ॥
कर्मणि भवति च निपुणः सर्वत्राभ्यासयोगतः पुरुषः ।
रागवशादिह युक्तः स्यादभ्यासः समस्तस्य ॥ २४ ॥

---

१ 'नाभिमूलककुन्दरवक्षणेषु तस्य प्रयोग '। ८ का० सू० अ० २ अ० ४ सू० १६ ) । २ शशकप्लुतानन्तर सूत्रे ' स्तनपृष्ठे मेखलापथे चोत्पलपत्राकृतीत्युत्पलकं ' इत्युत्पलपत्रकमधिकमुक्तम् । ३ एतच्च स्मरणीयकमिति वात्स्यायनेनोक्तम् ।

तस्मादत्र विधेयाः कथितादन्येऽपि कामुकैर्भेदाः ।
इति कथयन्त्याचार्याश्चित्रापेक्षा गृहेऽप्यस्ति ॥ २५ ॥
वैचित्र्यान्नखराणां कार्यो रागः परस्परं यूनोः ।
भवति विचक्षणतायां रागाधिक्यं स्फुटं जगति ॥ २६ ॥
विद्यान्तरेऽपि निपुणाः पूज्यन्ते भूरिशालिभिस्तेषु ।
किं पुनरत्रेत्याहुर्वात्स्यायनसंज्ञया रूढाः ॥ २७ ॥
परनारीषु न कुर्यान्मदने पूर्णेऽनतान्नखाघातान् ।
स्मरणार्थं कुर्याच्चासां छन्नेषु देशेषु ॥ २८ ॥
पश्यन्त्या नखरक्षतमप्रकटस्थानमण्डनं सुतनोः ।
चिरमुत्सृष्टाऽपि नवा भवति प्रीतिर्मनःसुखदा ॥ २९ ॥
भजति पराभवमेषा प्रीती रागेषु दूरमुक्तेषु ।
रागभवनसंस्मारकमस्तमितं चेन्नखैश्चिह्नम् ॥ ३० ॥
नखभूषितकुचकमलां युवतिं दूरात्मपश्यतो यूनः ।
प्रभवति भूयान्मानो रागाधिक्यं परस्यापि ॥ ३१ ॥
चित्तं स्थिरमपि सुदृशां दृष्ट्वा पुरुषं विचित्रितं नखरैः ।
चञ्चलतामधिगच्छति सरसिजमिव वात्ययाऽभिहतम् ॥ ३२ ॥
रागविवृद्धावपरं नातः किमपीह विद्यते लोके ।
नखदन्ताभ्यां रचिता वपुषि च्छेदा यथा शक्ताः ॥ ३३ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽप्रमवाणशासनानुसृते ।
सांपोगिकेऽधिकरणे रचितोऽध्यायश्चतुर्थोऽसौ ॥ ३४ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ द्वितीये
सांप्रयोगिकेऽधिकरणे चतुर्थोऽध्यायः ।

---

## अथ द्वितीये सांप्रयोगिकेऽधिकरणे पञ्चमोऽध्यायः ।

पञ्चमपध्यायमर्यो जन्मनिधिर्येऽत्रासु कीर्तितः कविभिः ।
स्पर्शोरयोति धार्तिकचन्द्रकरमस्फुरत्कीर्तिः ॥ १ ॥

स्थानानि चुम्बनानां दशनच्छेदस्य चारु बोध्यानि ।
अन्तर्मुखोत्तरोष्ठे मुक्त्वा नयनाम्बुजे चैव ॥ २ ॥
समता स्निग्धा च्छाया रागग्रहणे च भूरि सामर्थ्यम् ।
युक्तप्रमाणता च छिद्राभावोऽग्रतस्तैक्ष्ण्यम् ॥ ३ ॥
एते दशनगुणाः स्युः, कुण्ठा बाह्योद्गतास्तथा परुषाः ।
विषमाः सूक्ष्माः पृथवो विरला ज्ञेयास्तु दुष्टेषु ॥ ४ ॥
सोच्छूनकमिह गूढकमुक्तं विन्दुस्तदुत्तरा मालां ।
प्रोक्तः प्रवालमणिरथ मणिमाला चाभ्रकं खण्डात् ॥ ५ ॥
सप्तैतेऽष्टममुदितं चर्वितकं स्याद्वराहतः परैः ।
ईषद्रागविभाव्यं गूढकमधरस्थले कथितम् ॥ ६ ॥
मध्येऽधरस्य कथितो दन्ताभ्यां खण्डनादसौ स्तोकात् ।
गूढकमुच्छूनकमथ निःखण्डनमेव निर्दिष्टम् ॥ ७ ॥
ज्ञेयं कपोलभागे स्थानं समणेः प्रवालकस्यापि ।
सुदृशां वामकपोलेऽलङ्करणं चुम्बनं नखरः ॥ ८ ॥
दशनच्छेद्यसमेतं कथितं तत्कर्णपूरकं चैव ।
दन्तौष्ठाभ्यां रचिते निस्पन्दे पीडनेऽभ्यसनात् ॥ ९ ॥
सिद्धिः प्रवालकमणेः स्थानममुष्य स्फुटं कथितम् ।
देशान्तरे तु कथिता दशनानिवये मणेर्माला ॥ १० ॥
उभयत्र भूरिदन्तैः कथिता प्रकटं च बिन्दुमालाऽपि ।
मालाद्वयप्रदेशो गलकक्षादिः समुद्दिष्टः ॥ ११ ॥

---

१ श्लक्ष्णा इति सूत्रे पाठः । २ बिन्दुमालेत्यर्थः । ३ खण्डाभ्रकमित्यर्थः । ४ वराहचर्वितकमित्यर्थः । ५ अपिशब्दाच्छूनकस्यापि कपोलभागे स्थानं ज्ञेयम् । ६ कस्मिन् कपोले इत्याह–सुदृशामित्यादि । ७ 'यथा कर्णपूरश्चारुत्वाद्वामे कर्णे विन्यस्तो वामकपोलस्य मण्डनं भवति तथा' इति जयमङ्गला । ८ 'अल्पदेशायाश्च त्वचो दशनद्वयसंदंशजा बिन्दुसिद्धिः' (का० सू० अ० २ अ० ५ सू० १२) बिन्दोः स्थानं त्वधरमध्यं ज्ञेयम् । ९ आदिशब्दात् वक्षणस्य ग्रहणम् ।

युक्तं विषमैः शिखरैः स्तनयोः पृष्ठे च मण्डलाकारम् ।
खण्डाभ्रकं निगदितं स्वरभिदा विन्दुमालायाः ॥ १२ ॥
संहतियुक्ता दीर्घा वह्नी दशनाहतेः स्फुटा पंक्तिः ।
शोणान्तरालशोभा चर्वितमुक्तं वराहस्य ॥ १३ ॥
स्थानममुष्य तु सुदृशां कुचकरिकुम्भौ विनिर्जिताम्भोजौ ।
एतद्वितयमुदाहृतमुद्धटवेगौ यदा चोभौ ॥ १४ ॥
स्यादभियोज्यानामिह ताम्बूले चापि कर्णपूरादौ ।
नखरदशनाभियोगः स्यादिदमभियोगसंबन्धि ॥ १५ ॥
उपचारो नारीणां रुचिरो देशानुसारतो भवति ।
शुचिरार्यशयाणां कथितोऽसौ मध्यदेश्यानाम् ॥ १६ ॥
चुम्बननखदन्तक्षतविद्वेषिण्यस्तनस्त्विमाः कथिताः ।
एषैव रीतिरुक्ता वाह्लीकावन्तिजातानाम् ॥ १७ ॥
आलिङ्गनपरिचुम्बनभूषणनिरता क्षते तथा विरताः ।
प्रहणनसाध्या वध्वो मालवदेशोद्भवा बोध्याः ॥ १८ ॥
आभीरप्रभवाणां सुदृशामेषैव रीतिरुद्दिष्टा ।
सिन्धुनदीषष्ठानामन्तःस्थानां च नारीणानाम् ॥ १९ ॥
निष्ठीपरिष्टके स्याल्लाटमृगाक्ष्योऽपरान्तिकाश्च तथा ।
प्रोक्ताः प्रचण्डवेगाः सीत्कृतमन्दास्तथैवैताः ॥ २० ॥
खरवेगा अपवस्तुनि कृतरुचो गाढसंप्रहाराश्च ।
विज्ञेया रतिनिरतैः स्त्रीराज्ये कोशलायां च ॥ २१ ॥
रतिनिरता अतिभृशोऽशुचिरुचयः शिष्टनिन्दिताचाराः ।
आन्ध्रोद्भवा मृगाक्ष्यो, मरहट्टोद्भवा वनिताः ॥ २२ ॥
अश्लीलरूपवाक्या रागिण्यश्चारिलष्टप्रयोगेषु ।
शयने सरभसयत्नाः प्रार्थ्याः स्वापशीलेन ॥ २३ ॥
मरहट्टजामपाना नागरिका रहसि संप्रकाशन्ते ।

१ नागरिकाः पाटलिपुत्रभवाः ।

द्रविडस्त्रियो रतादिह मन्दं मन्दं प्रसिञ्चन्ति ॥ २४ ॥
मध्यमवेगाः सुसहास्त्यागिन्यः परुषकुत्सितादीनाम्।
स्वपरापचारमुद्रणकथनरता यावनोद्भूताः ॥ २५ ॥
मृद्वङ्ग्यो मृदुभाषाः स्फुरदनुरागाश्च गौडवामाक्ष्यः।
देशात्सुवर्णनाभः प्रकृतिं शास्त्रे बलीयसीं प्राह ॥ २६ ॥
एवं चोपचरेदिह कालं प्रकृतिं समीक्ष्य वामाक्षीम्।
देशानुसारतः सा तुष्यति नैवान्यथा प्रकृतिः ॥ २७ ॥
कालविशेषानुसृतेरुपचाराश्चाथवा शुभा लीलाः।
देशं देशान्तरमपि गाहन्ते तास्तथा विद्यात् ॥ २८ ॥
पूर्वं पूर्वं त्वेतत्कुरुते वृद्धिं चतुर्षु रागस्य।
आलिङ्गनादिषु मतं चित्रमिहैवोत्तरं तद्वत् ॥ २९ ॥
पुरुषो निवार्यमाणः कुर्याद्दशनक्षतं तस्याः।
असहिष्णुस्तत्कुर्याद्द्विगुणं हरिणेक्षणा तस्य ॥ ३० ॥
बिन्दोः प्रतिक्रियायां माला तस्याश्च नैरदः[1] शकलैः।
इत्याविष्टेव रुषा कलहान् प्रतियोजयेदबला ॥ ३१ ॥
सकचग्रहमस्यास्यं कृत्वोन्नतमापिबेत्ततस्त्वरितम्।
नीमीलयेद्दशेदथ समदा शयनस्थले बाला ॥ ३२ ॥
उन्नम्य कण्ठदेशं वक्षस्थलसंस्थिता प्रियस्यैषा।
मणिमालां रचयेदिह यच्चान्यल्लक्षितं रदनैः ॥ ३३ ॥
दिवसे जनसंबाधे स्वकृतं चिह्नं प्रियः समुद्दिश्य।
दर्शयति तच्च दृष्ट्वाऽदृष्टाऽन्यैः सोपहासा स्यात् ॥ ३४ ॥
मुखमिव कूणयन्ती नायकमिव कुत्सयन्त्यसौ निपुणा।
स्वाङ्गनिषण्णं चिह्नं प्रथयेदिह साभ्यसूयेव ॥ ३५ ॥
अन्योन्यानुगुणत्वादेवं लज्जाविशिष्टयोर्यूनोः।
अपि संवत्सरशतके न प्रीतिर्हीयते रुचिरा ॥ ३६ ॥

---

१ नैरदः शकल इति खण्डाभ्रकमित्यर्थः।

श्रीवीरभद्रकृतिना शास्त्रेऽस्मत्राणशासनानुसृते ।
सांयोगिकेऽधिकरणे निर्मित इह पञ्चमोऽध्यायः ॥ ३७ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ द्वितीये सांप्रयोगिकेऽधिकरणे पञ्चमोऽध्यायः ।

---

## अथ द्वितीये सांप्रयोगिकेऽधिकरणे षष्ठोऽध्यायः ।

अथ षष्ठं स्पष्टयति प्रतिभटकष्टस्फुटोद्यमख्यातः ।
सांयोगिकेऽधिकरणेऽध्यायं ख्यातोऽस्तिनिर्वेण ॥ १ ॥
उच्चरते बहुरागा हरिणी संवेशमाचरेज्जघनम् ।
कृत्वा रहसि विशालं, संकुचितं हस्तिनी नीचे ॥ २ ॥
यत्र समतया न्याय्यो योगस्तत्र स्थितिः समा जघने ।
मृग्या तथा करिण्या वडवा ख्याता मुनीन्द्रेण ॥ ३ ॥
प्रतिगृह्णीयाद्रमणं जघनेनात्राप्यवस्तुना सहितम् ।
नीचरते सविशेषं रतयोः परयोर्यदृच्छेह ॥ ४ ॥
उत्फुल्लकं विजृम्भितमिन्द्राणीति त्रयं दिशेन्मृग्याः ।
ग्रन्थान्तरे तु निगदितमुत्फुल्लकमादिमं विज्ञैः ॥ ५ ॥
नीचं विधाय शीर्षं नवहरिणदृशः स्मरागमाचार्यः ।
ऊर्ध्वं विरचितजघनो रचयेदुत्फुल्लकं प्रथमम् ॥ ६ ॥
तत्र प्रसारयित्वा तिर्यङ्नीचे तु सक्थिनी कान्तम् ।
अवसज्य चेत्सतीच्छेज्जृम्भितकं तद्विनिर्दिष्टम् ॥ ७ ॥
साम्येन हरिणनयना स्वोरू विन्यस्य पार्श्वयोर्यूनः ।
बद्धाजानुनी स्वपार्श्वे कृत्वेन्द्राणी चिरं रमते ॥ ८ ॥
इन्द्राण्या व्याख्यानं रतमुच्चतरं च वीरभद्रेन ।
प्रतिगृह्य संपुटेन तु गृह्णीयात्स्फुटं नीचे ॥ ९ ॥
एतेन व्याख्यातं नीचतरं रतमत्र वीरभद्रेन ।
हस्तिन्याः संपुटकप्रमुखं प्रोक्तं रतं शास्त्रे ॥ १० ॥

पीडितकं वेष्टितकं वाडवकं चेति संपुटप्रमुखम्।
संपुटकं द्विविधं तत्पार्श्वोत्तानप्रभेदेन ॥ ११ ॥
यत्रोभयोरुभावपि भवतोऽवक्रौ प्रसारितौ चरणौ।
तत्र भवेत्संपुटकं वेत्तव्यं चेदृशाकारात् ॥ १२ ॥
अधिशयनं दक्षिणतो नार्याः पुंसो यतोऽस्ति सर्वत्र।
तस्मात्पार्श्वरतावपि दक्षिणभागस्थितिः पुंसः ॥ १३ ॥
संपुटके दृढमूरू पीड्येते पीडितं तदा प्रोक्तम्।
व्यत्यासे स्यादूर्वोर्वेष्टितकं कामशास्त्रेषु ॥ १४ ॥
वडवेव निष्ठुरं चेदवगृह्णीयाद्भुजं प्रिया पुंसः।
तद्वाडवकं निगदितमभ्यासादान्ध्रदेश्यानाम् ॥ १५ ॥
रामनृपतितनुजनिना यूना श्रीवीरभद्रदेवेन।
इति कथिताः संवेशनरीतय इह बाभ्रवीयाणाम् ॥ १६ ॥
कथयति सुवर्णनाभो भेदानन्यांस्तु भुग्नकप्रभृतीन्।
ऊर्ध्वावूरू नार्या भवतश्चेद्भुग्नकं भवति ॥ १७ ॥
ऊर्ध्वौ चरणावस्याः कृत्वा चेत्तां तु धारयेत्तरुणः।
हृत्संलग्नौ कथितं जृम्भितकाद्यैस्तथा शब्दैः ॥ १८ ॥
इदमेकस्मिश्चरणे वितते स्यादर्धपीडितं प्रथया।
अंसगते त्वेकस्मिन् सारितमिदमेव निर्दिष्टम् ॥ १९ ॥
व्यत्यासे मुहुरिदमिह लक्षणतो वेणुदारितं कथितम्।
शूलाचितकं शीर्षे यद्येकः स्यात्परो धराप्रसृतः ॥ २० ॥
आभ्यासिकमिदमुक्तं यदि तु पदे द्वे विकुञ्चिते वेस्तौ।
प्रोक्तं तत्कार्कटकं प्रोक्तोर्वोर्व्यत्यये पीडा ॥ २१ ॥
जङ्घाया व्यत्यासे पद्मासनमिह निगद्यते विबुधैः।
पृष्ठस्थचन्द्रमुख्या आरचयन्त्याः परिष्वङ्गम् ॥ २२ ॥
अभ्यासादिदमुक्तं कामागमपारगामिभिर्विबुधैः।
निषेध्य कामशास्त्रं पराङ्मुखत्वे परावृत्तम् ॥ २३ ॥

१ 'भवति' ख. ग.।

उपविष्टः संविष्टः स्थितिमानयवा जलस्य पुरुषोऽन्तः ।
साभ्यासः स्याद्यत्नाच्चित्रान् योगांस्तया लभते ॥ २४ ॥
कथयति सुवर्णनाभोऽसुकरतया तेन चित्रयोगानाम् ।
शिष्टैरपस्मृतत्वाद्धिमतिर्वात्स्यायनस्यात्र ॥ २५ ॥
अथ कथयति सुकुमारो राजकुमारो रतोत्सवे चित्रम् ।
ऊर्ध्वस्थितयोर्यूनोरूर्ध्वरतं जायते तत्र ॥ २६ ॥
अन्योन्यापाश्रितयोर्यदि वा कुड्यादिसंश्रयत्वेन ।
स्मरशरनिहतहृदोरिह कथयन्त्यूर्ध्वं रतं विबुधाः ॥ २७ ॥
कुड्याश्रितस्य पुंसः कण्ठे संसक्तबाहुपाशायाः ।
तद्धनपञ्जरगायास्तज्जघनं वेष्टयन्त्याश्च ॥ २८ ॥
ऊरुभ्यामथ कुड्ये वलन्त्याश्चरणविक्रमेणास्याः ।
स्यादवलम्बितकं रतमथ धेनुकमेतदाम्नातम् ॥ २९ ॥
दृषलीलावस्कन्दनमधिधरणिधृतेश्चतुष्पदन्यायात् ।
तत्र रते खलु यूनोः पृष्ठमुरःकर्म संलभते ॥ ३० ॥
रीत्याऽनयत्र शौनं छागलमैणेयगर्दभाक्रान्ते ।
मार्जारक्रीडितकं व्याघ्रावस्कन्दनं चैव ॥ ३१ ॥
दन्तावल्गोपमर्दितमथ सूकरवाजिपृष्ठकास्ले ।
लक्षणमेषां कार्यं तत्रत्यापूर्वधैर्म्यात् ॥ ३२ ॥
संघाटकरतमुक्तं द्वाभ्यामाभ्यां सहैव मिश्राभ्याम् ।
वह्वीभिर्गोयूथिकमुक्तं स्त्रीक्रीडितं चैतत् ॥ ३३ ॥
विज्ञेयाः स्मरशास्त्रे तत्कर्मानुकारसंयोगात् ।
संज्ञाभेदास्त्वेते छागलमैणेयमित्याद्याः ॥ ३४ ॥
विषयविशेषे राज्ये युवतीनां स्त्रीसमानता पुंसाम् ।
तस्मादेकैकस्या बहवो विहिता युवानस्तु ॥ ३५ ॥

---

१ "वलन्त्याश्चरणविक्रमेणेति कुड्ये स्तम्भे वा पुनः पुनश्चरणविक्षेपेण कटिं मेहयन्त्याः" इति जयमङ्गला । २ 'अवस्कन्दनं कटिभागेऽभिगमनम्' जयमङ्गला ।

ते तामेकैकं वा युगपद्वा सात्म्ययोगयोर्दृष्ट्या ।
अनुरञ्जयेयुरुचितं तत्र च योगः प्रदर्श्यते विविधः ॥ ३६ ॥
विभूषादेनामन्यः कुर्यादस्या निषेवणं चान्यः ।
एको वदनं जघनं कश्चिन्मध्यं परः पुरुषः ॥ ३७ ॥
इति वारंवारं वा व्यतिकरतो वापि साधु चेष्टेरन् ।
एषा देशविशेषे नीतिः कथिता न सर्वत्र ॥ ३८ ॥
एतेन व्याख्याता वेश्या गोष्ठीपरिग्रहीभूता ।
तद्वद्राजस्त्रीणां व्याख्यातं तत्समासेन ॥ ३९ ॥
दक्षिणदेशेऽधोरतमुपदिष्टं भूरि जाययाऽप्युचितम् ।
इति वात्स्यायनरीत्या चित्ररते वीरभद्रोक्तिः ॥ ४० ॥
पुरुषायितके वाच्यं सम्यक्पुरुषोपसृप्तकं भूरि ।
वात्स्यायनप्रतिज्ञामनुसृत्यैवोचिताऽस्यापि ॥ ४१ ॥
पशुमृगपक्षिविलासैः बहुभिरुपायैः प्रबोधवांश्चित्रे ।
रतियोगानतियोगाद्विवर्धयेत्कामतत्त्वज्ञः ॥ ४२ ॥
तत्साम्यादथ सात्म्याद्देशानां भूरि भावयोगेन ।
स्त्रीणां स्नेहो रागो बहुमानो जायतेऽनुपमः ॥ ४३ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
सांयोगिकेऽधिकरणे षष्ठोऽध्यायः कृतः स्पष्टः ॥ ४४ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ द्वितीये सांप्रयोगिकेऽधिकरणे षष्ठोऽध्यायः ।

---

## अथ द्वितीये सांप्रयोगिकेऽधिकरणे सप्तमोऽध्यायः ।

---

अथ सप्तममध्यायं व्याख्याति ख्यातपौरुषो जगति ।
श्रीवीरभद्रनामा निर्जितकामाकृतिः कान्त्या ॥ १ ॥
कलहस्य रूपमाहुः सुरतं कामस्य वामशीलत्वात् ।
तस्य विशेषतयापि च तस्मादत्र प्रहारोऽस्ति ॥ २ ॥

अंसौ पृष्ठं स्तनयोरन्तर्मूर्धा तथा स्मृतं जघनम् ।
पार्श्वद्वयं च देशः प्रहणनकर्मणि शिरः क्वापि ॥ ३ ॥
अपहस्तकं प्रसृतकं समतलमुष्टी च तस्य चत्वारः ।
भेदाः, सीत्कृतमस्मादार्ततया भूरिभेदं च ॥ ४ ॥
विरुतं च, तत्र सीत्कृतमष्टविधं स्याद्धि हिङ्कृतप्रभृति ।
स्तनितं कूजितरुदिते फुत्कृतदूत्कारके तद्वत् ॥ ५ ॥
फूत्कृतफूत्कृतके अपि मोक्षार्था ये च विश्रुताः शब्दाः ।
एते सीत्कविशेषा अलमम्बावारणार्थाश्च ॥ ६ ॥
अर्थविशेषादेतान् हिङ्कृतकादीन् प्रयोजयेच्छब्दान् ।
वात्स्यायनानिरुक्तेः विस्तारो नादृतोऽनेन ॥ ७ ॥
पारावतपरभृतशुकमधुकरहारीतहंसदात्यूहाः ।
अनुकर्तव्या नन्विह लावककारण्डवौ वाचा ॥ ८ ॥
एवं च चक्रवाकः सीत्कृतभूयिष्ठमीदृशाः शब्दाः ।
एकैकशः प्रयोज्याः कामाकुलया नितम्बिन्या ॥ ९ ॥
पृष्ठे मुष्ट्यभिघातः क्रोडगतायाः प्रफुल्लपद्मास्याः ।
तत्र स्तनितप्रभृति च कुर्यादीसाभ्यसूयेव ॥ १० ॥
प्रतिघातानपि कुर्याद्योजितयन्त्रां स्तनान्तरे हन्यात् ।
अपहस्तकेन मन्दं प्रारम्भे वर्धमानं च ॥ ११ ॥
आरागपरिसमाप्तेर्हिङ्कारादीन् प्रयोजयेत्तत्र ।
तत्र विकल्पाभ्यासौ कथितौ तेषां प्रयोगस्य ॥ १२ ॥
विवदन्त्या सीत्कृत्य[1] प्रहणनमिह कुञ्चिताङ्गुलिकरेण ।
शिरसि प्रसृतकमाहुर्निश्चितकामागमाः पुरुषाः ॥ १३ ॥
अन्तर्मुखेन कुर्याच्चत्र च कृत्कारकूजिते यत्नात् ।
रतकर्मणोऽवसाने श्वसितं रुदितं विदध्याच्च ॥ १४ ॥
स्फुटतो वेणोरनुकृतिरुक्ता शब्दस्य दूत्कृतिः शास्त्रे ।
फूत्कृतिरिह विनिपततः पानीये पिप्पलस्योक्ता ॥ १५ ॥

---

१ 'कुन्दत्य' इति सूत्रे पाठः ।

सर्वत्र चुम्बनादेः प्रारम्भे स्यात्तु सीत्कृतेः करणम् ।
तेनैव प्रत्युत्तरमुक्तं रागप्रभावेण ॥ १६ ॥
अभ्यासे प्रहृतेरिह शब्दा वारणमोक्षालमन्वर्थाः ।
वक्तव्या रतिविरतौ श्वसिताद्युन्मिश्रितो योगः ॥ १७ ॥
विरुतानामपि तद्वद्रागावसितिक्षणे त्वराभिहतिः ।
जघनस्य पार्श्वयोर्वा समतलकं स्यादिहाम्नातम् ॥ १८ ॥
तत्र च लावकपरभृतहंसानां कूजितादरस्त्वरया ।
इति समतलप्रहणने प्रोक्तायोगाः प्रहारस्य ॥ १९ ॥
पारुष्यं रभसत्वं तेजश्चैवेह शोभते पुंसाम् ।
आर्त्यबलत्वेऽशक्तिर्व्यावृत्तिर्योषितां भाति ॥ २० ॥
रसात्प्रयोगसात्म्याद्भवति व्यत्यास एतयोः क्वापि ।
अचिरं प्रान्ते तस्य प्रकृतिर्भवतीति शास्त्रार्थः ॥ २१ ॥
कीलाकर्तरिके द्वे विद्धासंदंशिके तथैवान्ये ।
प्रहणनषट्कमित्थं सह पूर्वैर्दाक्षिणात्यानाम् ॥ २२ ॥
विद्धा कपोलदेशे कीलोरसि कर्तरी शिरोदेशे ।
संदंशिका च कुचयोः पार्श्वद्वितये च संदिष्टा ॥ २३ ॥
कीलान्युरसि मृगदृशा दृश्यन्ते दाक्षिणात्यदेश्यानाम् ।
देशविशेषाद्दृतमिदमपमतं वात्स्यायनस्येह ॥ २४ ॥
देशान्तरीयमन्यन्नैवं देशान्तरे मनोहारि ।
तद्देशेऽप्यात्ययिकं परिहर्तव्यं प्रयत्नेन ॥ २५ ॥
गणिकां कांचिद्धतवान्कश्चिद्राजा हि कीलया सुरते ।
राज्ञीमन्यो भूपः कर्तर्या दुष्प्रयोगेण ॥ २६ ॥
यद्विद्धाया योगात्काणां चक्रे नर्टी किलेहान्यः ।
तस्मादसावधानः प्रहणनयोगान्न कुर्वीत ॥ २७ ॥
अत्र न गणना मूलं नापि च दार्ढ्येन शास्त्रतोऽभ्यासः ।
उद्युक्ते रतिसमरे रागात्संजायते यूनोः ॥ २८ ॥

---

१ 'स्यादिह प्राप्तम्' ख.।

स्वप्नेष्वपि च न रसिकैरास्येते मात्रविभ्रमौ तौ हि।
कामिभ्यां तल्लक्षणमिह यौ स्यातां कल्पितौ सुरते ॥ २९ ॥
आसाद्य पञ्चमीमिह पथि धारां नेक्षते यथा तुरगः।
वेगान्धः श्वभ्रदरी स्थाणुं चान्यत्तथा विषमम् ॥ ३० ॥
एवं रतिसंमर्दे रागान्धौ कामशासनानुगतौ।
असमीक्ष्यात्ययमेतौ जायेते चण्डवेगौ द्वौ ॥ ३१ ॥
तस्माज्ज्ञात्वा मृदुतां बलचण्डत्वे च सारसाक्षीणाम्।
बलमात्मनश्च योगान् युञ्जीत ध्यातशास्त्रार्थः ॥ ३२ ॥
सर्वासु सर्वदा नहि योगाः सांयोगिका बुधैर्ज्ञेयाः।
स्थाने देशे काले समुचित एषां प्रयोगः स्यात् ॥ ३३ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽस्मन्बाणशासनानुसृते।
सांयोगिकेऽधिकरणे सप्तम इह निर्मितोऽध्यायः ॥ ३४ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ द्वितीये
सांप्रयोगिकेऽधिकरणे सप्तमोऽध्यायः।

---

## अथ द्वितीये सांप्रयोगिकेऽधिकरणेऽष्टमोऽध्यायः।

अथ रचयति पुरुषार्थं तस्याष्टममेष सादरोऽध्यायम्।
यस्य दरादरिमुद्गलः श्मश्रीमाश्रिता आरात् ॥ १ ॥
रत्यभ्यासश्रान्ते कान्ते रागाधिके कृतार्थित्वे।
अवपात्यैनं रचयेत्तत्पायितमेणशावाक्षी ॥ २ ॥
यदि वा स्वाभिप्रायादर्थितया मिलत्कल्पनासीक्तः।
नायककुतूहलाद्वा कल्पयेद्वन्धा कला पुंसः ॥ ३ ॥
तत्रेतरेण युक्ते यन्त्रे क्रियते यदोत्थितिस्तस्याः।
अत्यागवयेत्तदेनं स्यादेवं रत्यविच्छेदः ॥ ४ ॥

---

१ 'अश्वस्य विक्रान्तो वल्गितप्लुतकण्टकधुतगतयो नवधौतानि पञ्च धारा गतयः, तत्र पञ्चमीं गत्यास्यां प्रस्थानमास्थाय' नयनकृत्त्वा।

इत्यमनल्पगुणोऽयं प्रथमः कल्पः स्त्रियाश्रिते पुंस्त्वे ।
भवति परस्तु जघन्यो यन्त्रत्यागे समारम्भे ॥ ५ ॥
भ्रश्यत्केशगकुसुमा श्वासाद्विच्छिन्नहासलीला च ।
चुम्बितुमस्य मुखेन्दुं वक्षोजाभ्यां प्रविश्योरः ॥ ६ ॥
संपीडयन्त्यनुकलं नमयन्ती मस्तकं कृताश्लेषा ।
पूर्वं पुंसा रचयेदीर्ष्याकलुषेव मृद्वङ्गी ॥ ७ ॥
प्रतिपातयामि पूर्वं भवताऽहं पातिता महायत्नात् ।
इति रमणं प्रहसन्ती ब्रूयात् सन्तर्जयन्तीव ॥ ८ ॥
मध्ये मध्ये व्रीडां श्रमपभिरामा तथा विरामेप्साम् ।
संदर्शयेन्मुखश्रीनिर्जितराकेन्दुशोभैषा ॥ ९ ॥
पुरुषोपसृप्तकैरथ मुहुरुपसर्पेत तानि वक्ष्यामः ।
पुरुषः शयनगतायाः नीवीं विश्लेषयेत्सुदृशः ॥ १० ॥
कुर्यादेतत्तस्या चित्तं व्याक्षिप्य भूरिभिर्वचनैः ।
एवं नीवीमोक्षे यूनो रागोऽधिको भवति ॥ ११ ॥
तत्र विवादे तामथ गण्डे परिचुम्ब्य चाकुलीकुर्यात् ।
परिसंस्पृशेच्च बहुधा स्थिरलिङ्गस्तत्र तत्रैनाम् ॥ १२ ॥
प्रथमं सुसंगता चेद्द्वयोरिह संहतिं स्फुटीभजतोः ।
रचयेद्घट्टनमन्तः कन्यायाश्चैवमातनुयात् ॥ १३ ॥
स्तनयोरथ संहतयोः करकक्षास्थानयोर्गले चांसे ।
स्वैरिण्यां रचयेदिति सात्म्यं योगं पुरस्कृत्य ॥ १४ ॥
अलके निर्दयमेनामवलम्ब्याथ चुम्बनं कर्तुम् ।
अङ्गुलिसंपुटकेन च हनुदेशे प्रस्फुरन्मदनाम् ॥ १५ ॥
तत्रेतरा सलज्जा रचयेदामीलनं दृशोः सुमुखी ।
प्रथमसमागमसमये रतिसंयोगे च कन्यायाः ॥ १६ ॥
एषा कथमनुरक्ता स्यादिति कुर्यात्प्रवृत्तितो वीक्षाम् ।
उपसर्पन् युतयन्त्रो यत्रैषा प्रापयेद्दृष्टिम् ॥ १७ ॥
पीडां तस्यास्तत्र च तनुयादेतद्रहस्यमेणाक्ष्याः ।

आह च सुवर्णनाभः कामागममार्गमाश्रित्य ॥ १८ ॥
व्रीडानाशः स्रस्तिर्गात्राणां मीलनोदयश्च दृशोः ।
इति रत्यधिका ज्ञेयं भावोदयलक्षणं स्त्रीणाम् ॥ १९ ॥
कम्पौ दृशनच्छेदः करपङ्कजयोर्विधूननं स्वेदः ।
उत्थानानर्पणमथ निहतिश्चरणाम्बुजाभ्यां च ॥ २० ॥
अतिवृत्ती रतिविरतौ पुंसोऽनुदयस्य लक्षणान्याहुः ।
कामागमपरिशीलनचतुरा बहवो युवानस्तु ॥ २१ ॥
ऐनां यन्त्रावसरात्पूर्वं संवाह्य हस्तिना सदृशः ।
आमृदुभावात्क्षुब्धां रचयेत्करपङ्कजेनासौ ॥ २२ ॥
पश्चाद्रचयेदनया यन्त्रं यत्नादयन्त्रितस्मृतिभूः ।
पुरुषोपसृप्तकानि च कथयामो विस्तरादधुना ॥ २३ ॥
उपसृप्तकमन्थनहुलमर्दनपीडाश्च निर्हतिस्तद्वत् ।
सूकरवृषनिर्घातौ चटकविलासस्तथैवान्यः ॥ २४ ॥
संपुटसहितः प्रोक्तो वात्स्यायनसारसंदृष्ट्या ।
लक्षणमेषां क्रमशः कथयामस्तत्त्वबोधाय ॥ २५ ॥
न्याय्यमृजुसंमिश्रणमुपसृप्तकमत्र कामिभिः कथितम् ।
भ्रामणमथ हस्तेन च मन्थनमिह सर्वतो लैङ्गम् ॥ २६ ॥
नीचीकृत्य जघनमथ तदुपरि संघट्टयेद्भुजं च हुले ।
उर्ध्वे सरभसमिदमवमर्दनमिति संज्ञया समाम्नातम् ॥ २७ ॥
आहत्य ध्वजतश्चिरमवतिष्ठेत्पीडयन् यदा पुरुषः ।
पीडितकं तदिहोक्तं शास्त्रज्ञैरर्थयोगेन ॥ २८ ॥
उत्कृष्य स्वं जघनं दूराद्वेगेन पातयेच्च यदा ।
निर्घातोऽसौ कथितो मुनिना निर्घातयोगेन ॥ २९ ॥
एकत इह भूयिष्ठं लिखने कथितो वराहघातोऽसौ ।
उभयत्र क्रमलिखने वृषघातः कामिभिर्ज्ञेयः ॥ ३० ॥

---

१ 'तस्याः प्राग्यन्त्रयोगात् करेण संबाधं गज इव क्षोभयेत् आमृदुभावात्; ततो यन्त्रयोजनम्' ( का० सू० अ० २ अ० ८ सू० ) ।

वारैकं संमिश्रितमनिःसार्यैव समस्तदेशेषु ।
द्विस्त्रिश्चतुरिति घट्टनमुदिता चटकस्य लीलेयम् ॥ ३१ ॥
व्याख्यातं करणं त्विह रागावसितौ तु संपुटख्यात्या ।
तेषां स्त्रीसात्म्यादिह युक्तो योगो विकल्पेन ॥ ३२ ॥
पुरुषायितेऽधिकानि तु कथितान्यन्यानि संज्ञया त्रीणि ।
संदंशभ्रामरकौ प्रेङ्खोलितमुल्लसत्कामम् ॥ ३३ ॥
वैाडवकेन गृहीत्वा निष्कर्षन्त्या प्रपीडयन्त्या वा ।
सुचिरं स्थानं प्रोक्तं संदंशत्वेन शास्त्रेषु ॥ ३४ ॥
यत्राभ्यासाधिवयाच्चक्रभ्रमणं गृहीतयन्त्रायाः ।
तमिह भ्रमरकमाहुर्जघनोत्क्षेपोऽत्र पुंसस्तु ॥ ३५ ॥
दोलावज्जघनस्य प्रेङ्खोलितमुच्यतेऽभितो भ्रमणे ।
लक्षितमेवं त्रितयं वात्स्यायनभाषितेनेह ॥ ३६ ॥
अैलिकेऽलिकं निधाय स्वीयं रमणस्य युक्तयन्त्रैव ।
पुरुषायितेन खिन्ना विश्रामं प्राप्नुयादुचितम् ॥ ३७ ॥
पुरुषस्यावर्तनमिह पुनरुचितं स्त्रिया विश्रमे जाते ।
इति पुरुषायितरूपं कथितं मुनिना विविच्यैव ॥ ३८ ॥
प्रच्छादितस्वभावा तद्रूपरिगूढरागसंभारा ।
विवृणोति स्वं भावं रागादुपरि स्थिता यूनः ॥ ३९ ॥
शीलं रतिलालसतां तत्त्वेनास्यास्तदीयचेष्टाभिः ।
जानीयादनुरक्तस्तस्यां स्यादानुकूल्येन ॥ ४० ॥
पुरुषायिते न नारीमृतुकालीनां नवप्रजातां च ।
न मृगीं गर्भवतीं वा नातिस्थूलां युतां कुर्यात् ॥ ४१ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
सांयोगिकेऽधिकरणे स्पष्टोऽभूदष्टमोऽध्यायः ॥ ४२ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ द्वितीये
सांप्रयोगिकेऽधिकरणेऽष्टमोऽध्यायः ।

---

१ 'वाडवकेन वराङ्गौष्ठसंश्लेषेन' जयमङ्गला । २ अलिके ललाटे ।

## अथ द्वितीये सांप्रयोगिकेऽधिकरणे नवमोऽध्यायः ।

नवममनवमं कुरुतेऽध्यायं सांयोगिकेऽधुना वीरः ।
अधिगत्य येन समरं निर्वीरो वैरिवर्गोऽभूत् ॥ १ ॥
प्रकृतिर्द्विधा तृतीया स्त्रीपुंभेदेन तत्र पूर्वा तु ।
वेषालापौ यानं लीलां भावं च भीरुत्वम् ॥ २ ॥
मृदुतामृजुतां व्रीडां स्त्रीणामनुपाति चासहिष्णुत्वम् ।
वदनेऽस्या जघनस्थितिशालिनि वात्स्यायनः प्राह ॥ ३ ॥
प्रथमोपरिष्टकं खलु लभते चैषा ततोऽधिकां रुचिम् ।
स्वीकृतवेश्याचरिता रतिमभिमानाद्व्रजायेषा ॥ ४ ॥
अन्या पुरुषाकृतिरिह गुप्तानङ्गा प्रियं भजेद्युक्त्या ।
संवाहकादिभावं गत्वा नैव प्रकाशं तु ॥ ५ ॥
गत्वा संवाहकतां गात्रैरुरु परिष्वजन्त्यस्य ।
गृह्णीयात्परिचर्यामूर्वोर्मूलं स्पृशन्ती च ॥ ६ ॥
उपलभ्य ध्वजधैर्यं प्रथ्नीयात्पाणिना दृढं बहुधा ।
चापलमस्य सकृत्सं प्रहसेदनुपक्रमेऽप्येवम् ॥ ७ ॥
स्वयमारचयेदुद्यमप्युद्युक्तेऽस्मिन्विवादशीलैषा ।
उपगच्छेत्कृत्स्नादिह कर्माष्टकमत्र निर्दिष्टम् ॥ ८ ॥
अविकल्पतः प्रयोज्यं निमितं दष्टं च पार्श्वतस्तद्वत् ।
संदंशो बहिरन्तश्चुम्बितपरिमृष्टके चैव ॥ ९ ॥
आम्रातचूषितं ननु संगर इति तेषु चेयमेकैकम् ।
अभ्युपगम्य विरामेऽभीप्सां संदर्शयेत्स्वस्य ॥ १० ॥
इतरः पूर्वोपगमात्ततो निर्दिशमाचरेत्परतः ।
तस्मिन्सिद्धे तत्परमितिः भाति कर्मणामेषाम् ॥ ११ ॥
ओष्ठोपरि विन्यस्तं हस्तेनालम्बितं ध्वजं पुरुषः ।
उपविध्यास्यं धुनुयादेतन्निमितं मुनिः प्राह ॥ १२ ॥

---

१ 'गत्वाऽन्तेच' क्व । २ 'रीतिः' क्व ।

आच्छाद्याग्रं पुरतो निर्दशन दशनवसनयुग्मेन ।
दष्टं पार्श्वत इष्टं पीडाया पार्श्वतः शास्त्रे ॥ १३ ॥
अत्र भवत्वेतावत्सान्त्वनमिति कामिनोर्मुदेऽभिमतम् ।
भूयोऽपि चोदिताऽसौ समीलितदशनवस्त्रा चेत् ॥ १४ ॥
सपीड्याग्र तस्य च मुश्वेद्दंशो वहिर्भवेत्कण्ठौ ।
तस्मिन्नभ्यर्थनया यदि किंचित्प्रक्षिपेदधिकम् ॥ १५ ॥
अत्रोष्ठाभ्यामियमथ चरितनिर्वृत्ति यदा वहिः कुरुते ।
अन्तःसंदशोऽसौ वात्स्यायनभाषितेनेह ॥ १६ ॥
हस्तावलम्बितस्य च चुम्बितकं दन्तवस्त्रवद्ग्रहणे ।
परिमृष्टकमिदमुक्त तत्कृत्वा जिह्वयाऽग्रेण ॥ १७ ॥
घट्टनमभितोऽग्रेण च तद्व्यथनं रागभारसयोगात् ।
अर्धप्रविष्टमीदृग्दशनासङ्गापुरस्कारात् ॥ १८ ॥
मुहुरवपीड्य विमुश्वेन्निगदितमिदमाम्रचूषित शास्त्रे ।
पुरुषाभिप्रायवशादवगिरण पीडनं चान्ते ॥ १९ ॥
उक्तः संगरनामा ग्रहणनयोगा इहार्थतो ज्ञेयाः ।
वात्स्यायनानुसारी विधिरयमौपरिष्टके कथितः ॥ २० ॥
स्वैरिण्यो दास्यो वा कुलटाः संवाहिकास्तथा चैतत् ।
सम्यक्प्रयोजयन्ति न च कार्यं समयविरोधादेतत् ॥ २१ ॥
यदि वाऽसभ्यतयाऽऽसा पुनरपि वदनाम्बुजस्य ससर्गे ।
स्वस्याप्यत्यापत्तेरिति कथयत्यागमाचार्यः ॥ २२ ॥
योगाभ्यासादधिगततत्त्वो वात्स्यायनो गुणाभिरतः ।
दोषोऽयमपरिहार्यो वेश्याभिरताविति प्राह ॥ २३ ॥
अत एव प्राच्याना रतिलीलायामिमाः सदा वर्ज्याः ।
आहिच्छत्रकदेश्या वेश्याना संगमारुचयः ॥ २४ ॥
साकेतकास्तु तासु च केवलमिह वक्त्रकर्मणे विरताः ।
रचयति नागरिको न तु तत्कर्मैवात्र सक्तोऽपि ॥ २५ ॥
अविशंकया त सर्वं रचयन्त्येवेह सौरसेना ये ।

ते कथयन्ति न लौकिकदृष्ट्या शौचादि नारीषु ॥ २६ ॥
त्याज्या न चेयैताऽऽसां वदने तत्कर्मपात्रभूतेऽपि।
चुम्बनमनुमयोर्व्यं स्त्रीमुख इत्यादिवाक्येन ॥ २७ ॥
वचनं तु सावकाशं सुचरितनारीषु चुम्बने विषये।
देशस्थित्यादेरिति वात्स्यायन आह संयोगम् ॥ २८ ॥
तरुणोपरिष्टकं किल तदुभयतः क्वापि चान्योन्यम्।
स्त्रीयोगेष्वनुरागी कर्पतत्सस्पृहं तनुते ॥ २९ ॥
व्यासस्तस्य तु विदितश्चुम्बनचरिते मुखाम्बुजेनेह।
युगपत्तु संप्रयोगे यूनोरिह काकिलः कथितः ॥ ३० ॥
अत एवास्मिन्निरतास्त्यक्त्वा वेश्या जनान् गुणैरुच्यान्।
रज्यन्ते दासादिषु नैषामस्मिन् जुगुप्सेति ॥ ३१ ॥
विप्रो विद्वान्मन्त्री वाक्ये कुशलो न कारयेदेतत्।
अपि वा समत्ययतां प्राप्तोऽथर्वोऽन्यथा भवति ॥ ३२ ॥
शास्त्रप्रचारमात्रान्नायं योगोऽखिलेषु देशेषु।
नास्ति श्वमांसभुक्तिर्विप्रोक्तया सर्वलोकस्य ॥ ३३ ॥
शास्त्रं च नाममाणं पुरुषा देशास्तथा तथा कालाः।
सन्त्येव यैरुपास्या अर्था निन्द्या अपि प्रकृताः ॥ ३४ ॥
ज्ञात्वा च देशकालौ शास्त्रं चैव प्रयोगमात्मानम्।
युञ्जीत योगमथवा भजतु विरागं प्रयोगेषु ॥ ३५ ॥
मनसश्चञ्चलताया अर्थस्यास्यातिगुप्ततायाश्च।
को वेद कः कदाचित्कुर्यादेतत्कुतः कर्म ॥ ३६ ॥
निन्दिततामपि यातोऽध्यायोऽयं वीरभद्रदेवेन।
वात्स्यायनीयपद्धत्या प्रयोगाप्तौ कथं त्याज्यः ॥ ३७ ॥
साध्वेव संनिवेश्यं क्रियते चेच्छेदनात् स्वयं ग्रन्थः।
व्याख्यायां परचिते तस्यानुस्मृतिः कथं त्याज्या ॥ ३८ ॥

---

१ 'नैनास्नानां' ख.। २ 'गुणैरुच्यान्' ख.। ३ 'तथ्यानुस्मृतिः' ग.।

श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
सांयोगिकेऽधिकरणे नवमोऽनवमः कृतोऽध्यायः ॥ ३९ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ द्वितीये
सांप्रयोगिकेऽधिकरणे नवमोऽध्यायः ।

---

## अथ द्वितीये सांप्रयोगिकेऽधिकरणे दशमोऽध्यायः ।

अथ दशमं विशदयितुं राजकुमारोऽयमुद्यतारम्भः ।
संरम्भनिहतरिपुगणरमणीसौभाग्यलुण्ठाकः ॥ १ ॥
भोज इवायं निरतो नानाविद्यानिबन्धनिर्माणे ।
समयोच्छिन्नेऽपि यः सोद्योगः कामशास्त्रेऽपि ॥ २ ॥
परिचारकमित्राभ्यां सहितः पुष्पैः सुधूपितैर्जुष्टे ।
संचारितशुभधूपे रतिवासेऽलङ्कृते भवने ॥ ३ ॥
रचितस्नानालङ्कृतिरीषत्पीनी च शास्त्रतो युक्त्या ।
रमणीमुपक्रमेदिह सान्त्वनतथैव पानेन ॥ ४ ॥
केशे हस्ते नीव्यां वस्त्रान्ते चावलम्बनं रतये ।
उपवेशनं विदध्याद्दक्षिणतो हरिणशावाक्ष्याः ॥ ५ ॥
सव्येन बाहुना स्यात्परिरम्भोऽप्यनुद्धतः सुदृशः ।
पूर्वाध्यायनिसृष्टैर्वचनै रागादिसंयुक्तैः ॥ ६ ॥
गूढाश्लीलाश्वार्थाः परिभाष्यास्ते समस्याभिः ।
अनिवृत्तं संनिवृत्तं गीतं वाद्यादि वा रचयेत् ॥ ७ ॥
संकथनं च कथाना भूयः पाने प्रवर्तनं तद्वत् ।
दृष्ट्वा च सानुरागां ताम्बूलाद्यैर्जनोद्वासः ॥ ८ ॥
उद्धर्षयेच्च विजने प्रोक्तैरालिङ्गनादिकैरेनाम् ।
उपक्रमेदनन्तरमस्पा नीवीवियोगादि ॥ ९ ॥

---

१ 'इवायमभिरतो' इति पा० २ 'ईषत्पीत' गः । ३ 'सनृत्तमनृत्तं वा गीतं वादित्रम्' सू० ७ ।

अवसाने रागस्य तु लज्जाभाजोरिवानयोर्यूनोः ।
अन्योन्यं परिदर्शनपरिहारेणोदितभयोः ॥ १० ॥
आचारभूमिगमनं पार्थक्येऽस्मान्निवृत्तयोरनयोः ।
व्रीडायमानमनसोरुचिते देशे समास्थितयोः ॥ ११ ॥
ताम्बूलग्रहणोत्तरमच्छीकृतचन्दनादि देहेऽस्याः ।
दत्त्वा स्वयं भुजेन च तामिह परिरभ्य सव्येन ॥ १२ ॥
कृत्वा चषकं हस्ते सान्त्वनमाधाय पाययेदुचितम् ।
तदनु जलस्य च पानं भुञ्जीयातां च खण्डादि ॥ १३ ॥
सात्म्यानुसारि सर्वं देशस्य स्यात्तयाऽऽत्मनोऽप्येतत् ।
अच्छं रसकं यूषं रुचिरयवागूं तथैवाम्लान् ॥ १४ ॥
पानकमभर्जितैरिह मांसैरचितोपदंशशोभाढ्यम् ।
आम्राणि मातुलुङ्गचुक्राद्यं शर्करासहितम् ॥ १५ ॥
मधुरमिदं मृदुविशदं निर्दिश्यैवं विदश्य तद्द्यात् ।
हर्म्यतलस्थितयोर्वा चन्द्रकराणां च सेवनं कर्तुम् ॥ १६ ॥
आसनमत्र कथाभी रुचिराभिः साधु वर्तेत ।
अङ्के लीनामेनां पश्यन्तीं मण्डलं सुधाभानोः ॥ १७ ॥
व्यक्तीकरणं कथितं रुच्या नक्षत्रपंक्तीनाम् ।
ध्रुवदर्शनं वशिष्ठमेपस्याश्चैवमेव सप्तर्षेः ॥ १८ ॥
रत्यारम्भसमाप्ती कथिते वात्स्यायनेनैवम् ।
अवसाने रतेरिह वर्धेतासामुपस्कृता प्रीतिः ॥ १९ ॥
प्रीतिकरैरन्योन्यं स्फुटविश्रम्भं कथायोगैः ।
भावानुवर्तनैरिह निजसंवर्द्धैर्भवेत्परा प्रीतिः ॥ २० ॥
क्षणमवलोकनविरहः क्रोधात्प्रीत्या तथा दृष्टिः ।
हल्लीसक्रीडनकैर्गीतैरपि नाट्यरासकैरुचितैः ॥ २१ ॥
रागाद्विलोलनयनैरिन्दोरपि दर्शनैरेवम् ।
प्रथमावलोकने सति पूर्वं ये स्युर्मनोरथा यूनोः ॥ २२ ॥
दुःखं पुनर्वियोगे प्रतिकीर्तननस्तयोरुभयोः ।

उक्त्वा संचुम्बनैरथ रागपरीरम्भणैस्तथा भावैः ॥ २३ ॥
संयुक्तैरिह यूनोः स्नेहो वृद्धिं समायाति ।
रागवदाहार्यरागकृत्रिमरागं च सान्तरो रागः ॥ २४ ॥
पोटारतं खलरतं रतमनियन्त्रं च संप्रोक्तम् ।
अवलोकनदिवसावधिरचिते यत्नेन संगमे यूनोः ॥ २५ ॥
गत्वा प्रत्यागमने कोपत्यागे च तत्राद्यम् ।
तत्रात्माभिप्रायात्प्रवृत्तिरुचितैव यावदर्थं च ॥ २६ ॥
एवं बाह्यरतोत्तरकालं यन्त्रे विलम्बोऽत्र ।
मध्यस्थरागभाजोरारब्धं यदनुरज्यते यूनोः ॥ २७ ॥
आहृतरागो, यस्मिन् योगैः संधुक्षणं रागे ।
कार्यार्थिमन्यसक्तौ यदि वा यः स्याद्रतोदयो यूनोः ॥ २८ ॥
कृत्रिममन्यद्धृदि चेद्व्यवहितमेतत्समाम्नातम् ।
कृत्रिमरते तु योगाः सर्वे शास्त्रात्समुच्चयात्कल्प्याः ॥ २९ ॥
न्यूनायां दास्यां वा पोटारतमर्थलाभान्तम् ।
उपचारानादृतिरिह कथिता पोटारते मुनिग्रन्थे ॥ ३० ॥
पण्याङ्गनया सह यस्स्याद्ग्रामीणस्य रागयातार्थम् ।
खलरतमिदमाम्नातं नागरस्य ग्रामकान्ताद्यैः ॥ ३१ ॥
अन्योन्यं विश्रम्भे सात्म्यादनियन्त्रितं तत्तु ।
वात्स्यायनीयदृष्ट्या रतभेदा वीरभद्रदेवेन ॥ ३२ ॥
कुसुमेषोरिह कथिता ग्रन्थे चूडामणौ क्रमशः ।
अप्रणयायाः कोपोऽयुक्तो युक्तस्तु वृद्धरागायाः ॥ ३३ ॥
नामग्रहं सपत्न्या तस्याः संबन्धि चालापम् ।
नो मर्षयेद्व्यलीकं भर्तुः स्खलितं तथा च गोत्रस्य ॥ ३४ ॥
तत्र भृशं कलहः स्याद्रुदितायासौ च जायेते ।
क्षोदं शिरोरुहाणां शयनासनतो धरातले पातः ॥ ३५ ॥
ताडनमपि भुवि शयनं भूषणमाल्यावमुक्तिश्च ।
एवं माने जाते भङ्गार्थं तस्य युक्तसामादेः ॥ ३६ ॥

युक्ते सति प्रयोगे तस्यां जातप्रसादायाम् ।
सानुनयोपक्रमतः शयनतले रोहयेदसावेनाम् ॥ ३७ ॥
तस्य च वन्धनमुचितं वस्त्रेणास्योत्तरीयेण ।
एवं विरूढकोपा सकचग्रहमुन्नमय्य तस्यास्यम् ॥ ३८ ॥
हन्यादङ्घ्रिकमलतो बाह्वोः पृष्ठेऽथवा शिरसि ।
वक्षसि वा वारैकं द्विस्त्रिर्वा तं निहत्य संगच्छेत् ॥ ३९ ॥
यावद्द्वारमथाश्रु करकमलेनापमृज्यात्सा ।
क्रोधाधिक्येऽपि च सा भूयो न द्वारदेशतो गच्छेत् ॥ ४० ॥
इत्याह दत्तकः खलु मत्त्वा दोषं तथा तस्याः ।
तत्रानुनीयमाना युक्त्या सा स्यात्प्रसादसाकांक्षा ॥ ४१ ॥
लब्ध्वाऽपि च प्रसादं सकषायोक्तिस्तुदेत्कान्तम् ।
सुरताकांक्षातरलामबलामेनां मिथः समालिङ्ग्य ॥ ४२ ॥
नीत्वा शय्यापृष्ठे स्वाङ्कालङ्कारतां गमयेत् ।
प्राप्य निमित्तं स्वीये यदि भवने स्यान्मृगेक्षणा रुष्टा ॥ ४३ ॥
जुष्टा तादृशचिह्नैरभिगच्छेन्नायकं त्वरया ।
तत्र नियुक्तैर्भर्त्रा सानुनयाऽसौ च पीठमर्दाद्यैः ॥ ४४ ॥
दूरे विधाय रोषं तेन सह स्वं गृहं गच्छेत् ।
तत्रैव वा वसेदिति कलहः प्रणये निरूपितो यूना ॥ ४५ ॥
न्यूना ग्रीष्मदिवाकरदवदहनास्तेजसो यस्य ।
चतुरधिकां षष्टिमिमां बाभ्रव्येण प्रकीर्तितां कान्तः ॥ ४६ ॥
वरनारीषु विरचयन्नधिगच्छति प्रान्मर्यां सिद्धिम् ।
शास्त्रान्तराणि कथयन्नप्ययमज्ञापयंश्चतुःषष्टिम् ॥ ४७ ॥
विदुषां संसदि न तथा कथया परिपूज्यतामेति ।
शास्त्रान्तरानभिज्ञो यस्त्वनयाऽलङ्कृतश्चतुःषष्ट्या ॥ ४८ ॥
गोष्ठ्यां स स्त्रीनरयोर्गोष्ठीष्वग्र्यं विगाहते नियतम् ।
एनां विद्वत्पूज्यामधिकतरं पूजितां च खलैः ॥ ४९ ॥

---

१ 'तस्य च वचनमुत्तरेण योजयन्ती' इति सूत्रे पाठ ।

गणिकागणपरिपूज्यां सत्कुरुते नन्दिनीं को न ।
नामान्यस्याः शास्त्रे सुभगङ्करिणीति नन्दिनी सुभगा ॥ ५० ॥
नारीप्रिया च सिद्धा कामाचार्येण गीयन्ते ।
कन्यापरयोपितद्ध्यां पण्याङ्गनया च भावशालिन्या ॥ ५१ ॥
निपुणोऽस्यां विद्यायां बहुमानेनेक्ष्यते कामी ।
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
सायोगिकेऽधिकरणे दशमोऽध्यायः कृतो विशदः ॥ ५२ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ द्वितीये
साप्रयोगिकेऽधिकरणे दशमोऽध्याय ।
समाप्तं चेदं द्वितीयं साप्रयोगिकमधिकरणम् ।

---

## अथ तृतीये कन्यासंप्रयुक्ताधिकारे प्रथमोऽध्यायः ।

इत्थं स्मरसर्वस्वं सांयोगिकमादितो निरूप्यासौ ।
शास्त्रेऽस्मिन्नधिकरणं तस्मात्परमादरात्तनुते ॥ १ ॥
कन्यायुक्तकनाम्न्यधिकरणेऽथ द्वितीयतः परतः ।
यतते सार्थकतायै प्रथमेऽध्याये महाबाहुः ॥ २ ॥
अध्यायाः पञ्चास्मिन्कन्यायाः संप्रयुक्तके कथिताः ।
तत्र प्रथमेऽध्याये वरणविधिर्निर्णयः संगे ॥ ३ ॥
कन्याया विश्रम्भणमुदितं तस्य द्वितीयकेऽध्याये ।
बालोपक्रमसहितं चेष्टाकारस्य तस्य रागेषु ॥ ४ ॥
सूचनमुक्तं विशदं कथितेऽध्याये तृतीयेऽतः ।
एकपुरुषाभियोगः प्रतिपत्तिश्चात्र कन्यायाः ॥ ५ ॥
पञ्चम इह चाध्याये भूमीपञ्चेषुणाऽमुना यूना ।
कथिताः स्फुरत्प्रपञ्चं योगा वैवाहिका विशदाः ॥ ६ ॥
इत्थं कृत्वा संग्रहमाग्रहपरिदिष्टसमस्तशास्त्रार्थः ।
अधिकरणं विशदयति स्मरशास्त्रस्य तु तृतीय सः ॥ ७ ॥
अधिगन्तव्या विधिना यस्या दानोपभोगयोः पूर्वम् ।

नान्यः सा च सवर्णा भूमिर्धर्मार्थपुत्राणाम् ॥ ८ ॥
अनुपस्कृता रतिः स्यात्पक्षाधिक्यं च जायते तस्मात् ।
निन्दिततोपस्कृतता न्यूनाधिकवर्णयोर्विदिता ॥ ९ ॥
साभिजनामिति कन्यां मात्रा पित्रा च संयुतां युक्ताम् ।
वर्षत्रयेण[१] वयसा यदि वा नवेनोनेह कालेन ॥ १० ॥
श्लाघ्याचारे धनवति पक्षिणि संबन्धिनां मुहुः सुखदे ।
संबन्धिभिः परीते जातामेवंविधे वंशे ॥ ११ ॥
पितृपक्षाधिक्यवतीं संपन्नां रूपलक्षणैरुचितैः ।
अन्यूनानधिकाङ्गीमक्षीणाक्षिस्तनीमपि च ॥ १२ ॥
अक्षीणकेशदन्तां नखकर्णाक्षैण्यशालिनीं तद्वत् ।
सहजारोगशरीरां श्रुतवानेवंविधः पुरुषः ॥ १३ ॥
शीलयतु यां गृहीत्वा मन्येतात्मानमेष सत्कृतिनम्[२] ।
याचेत नैव चैनामन्यसवर्णान्वितां पूर्वम् ॥ १४ ॥
इति घोटकमुखभणितेर्न्यूनाधिक्ये न याचनं युक्तम् ।
तस्यावरणे पित्रोर्यत्नः सम्बन्धिनां चैव ॥ १५ ॥
मित्राणामपि युक्तः संसक्तानां[३] प्रचारोऽत्रै ।
वरयित्रन्तरदोषं दिशतां निजसंस्तवं चैव ॥ १६ ॥
अनुकूलयेयुरनिशं[४] कथया कौलादितद्गुणायत्या ।
कन्यामातुर्हृदयं विशिष्यैं मित्राणि यत्नेन ॥ १७ ॥
ज्योतिर्विरसुहृदस्य तु शकुनग्रहलग्नराशिनक्षत्रैः ।
दृष्टैरपि च निमित्तैः संबन्धं भावयेत्तस्याः ॥ १८ ॥

---

१ 'वर्षत्रयोना' इति पाठान्तरम्। २ 'यां गृहीत्वा कृतिनमात्मानं मन्येत न च समानैर्निन्द्येत, तस्यां प्रवृत्तिरिति घोटकमुखः' का० सू० अ० ३ अ० १ सू० ३। ३ 'प्रशस्तानां' इति पा०। 'मित्राणि च गृहीतवाक्यान्युभयसंबद्धानि' का० सू० ३ अ० १ सू० ४। ४ बहुधा' इति पा०। 'कौलान् पौरुषेयानभिप्रायसंवर्धकांश्च नायकगुणान् विशेषतश्च कन्यामातुरनुकूलान् तदात्वायतियुक्तान् दर्शयेयुः' का० सू० स० ३अ० १ सू० ६।

कन्यान्तरलाभकथां कथयित्वाग्रे च कन्यकामातुः ।
उन्मादयेयुरस्या हृदयं केचित्प्रयत्नेन ॥ १९ ॥
दद्याद्वा वरयेद्वा दैवादेरानुकूल्यतः कन्याम् ।
नतु केवलं निजेच्छा तत्र समर्थेति केऽप्याहुः ॥ २० ॥
धात्रनरोदनशीलां वरणावसरे च निद्रया युक्ताम् ।
परिवर्जयन्ति कन्यां वरणे सन्तः प्रयत्नेन ॥ २१ ॥
यस्या नाम न शस्तं या च विदन्ता तथा घोना ।
अन्यार्थे या गुप्ता दत्ताऽत्यन्तं नता विकटा ॥ २२ ॥
न्यङ्गा मिश्रा पृपता ऋपभस्कन्धाऽमर्पशीला च ।
वृषली मुण्डा गुल्मंबिभ्राणा या विदूषिता चैव ॥ २३ ॥
फलिनी नक्षत्राख्या नाम्ना नद्यास्तथा च वृक्षाणाम् ।
वरणे वर्ज्योपान्ते युक्ता स्याद्रेफलाभ्यां हि ॥ २४ ॥
एके तु चित्तनयने यस्यां पुरुषस्य चानुरज्येते ।
तस्यामृद्धिं प्राहुस्तदभावे लक्षणं विफलम् ॥ २५ ॥
तस्मात्प्रदानकाले कर्तव्या दानवेपसंयुक्ता ।
स्थाप्या दर्शनविषये नायकचेतोऽनुरागाय ॥ २६ ॥
अपराह्णे वा नित्यं सालङ्कारा चरेदसौ क्रीडाम् ।
यज्ञविवाहादिषु वा जनसमवाये निरीक्ष्यैषा ॥ २७ ॥
संदर्शनानुचिततां हन्ति च पण्येन साम्यमेतस्याः ।
तस्मात्कन्याकुलजैरेषा संदर्शनीयैव ॥ २८ ॥
वरणायागमभाजः शुभदर्शनसाधुवादसंदर्भान् ।
संबन्धिसुहृदुपेतान्कुलपुरुषान्मङ्गलैरुचितैः ॥ २९ ॥
प्रतिगृह्णीयुः कन्यापक्षीयास्तां च भूषितां तेषाम् ।
संदर्शयेयुरुचितं रम्यामन्यापदेशेन ॥ ३० ॥
दैवपरीक्षणमवधिः स्थाप्यो यावन्न निश्चयो दाने ।

१ 'दैवनिमित्तशकुनोपश्रुतीनामानुकूल्येन कन्यां वरयेद्दद्याच्च' का० सू० अ० ३ अ० १ सू० ९ ।

उक्त्वा भविष्यतीति च ते स्नानादौ नियोज्याः स्युः ॥ ३१ ॥
परिणयमस्या रचयेद्ब्राह्मेण विधिनाऽथ शास्त्रेण ।
इति संक्षिप्य निगदितो वरणविधिः कामसूत्रेषु ॥ ३२ ॥
संगतविवाहकार्ये सह लीला वा तथा समस्याद्याः ।
तुल्यैः कार्या विषमैरधमैरिव नोच्चमैरुचिताः ॥ ३३ ॥
कृत्वोद्वाहं गमनं यदि वा तत्रैव रोचयेद्वासम् ।
एष विकल्पो युक्तो देशाचाराद्व्यवस्थायाम् ॥ ३४ ॥
वर्तेत यत्र रमणः कन्यामुद्वाह्य दासभावेन ।
उच्चोऽसौ संबन्धः सद्भिर्निर्बन्धतस्त्याज्यः ॥ ३५ ॥
वर्तेत यत्र रमणः कन्यामुद्वाह्य वा प्रभुत्वेन ।
नीचोऽसौ संबन्धः सद्भिर्निर्बन्धतस्त्याज्यः ॥ ३६ ॥
यत्र सुखानि परस्परमपि प्रभवन्तीह शोभना लीलाः ।
मिथ उत्कर्षनिदानं संबन्धोऽसौ विधेयः स्यात् ॥ ३७ ॥
कृत्वोच्चं संबन्धं बन्धुषु कन्यां नयेदसौ नम्रः ।
नीचं न तु रचयेदिह संबन्धं निन्दितं सद्भिः ॥ ३८ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
कन्यायुक्ताधिकृतौ प्रथमोऽध्यायः कृतः साङ्गः ॥ ३९ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ तृतीये कन्यासंप्रयुक्ताधिकरणे प्रथमोऽध्याय. ।

---

## अथ तृतीये कन्यासंप्रयुक्ताधिकरणे द्वितीयोऽध्यायः ।

अथ कथयत्यध्यायं द्वितीयमेषोऽद्वयप्रभो वीरे ।
दोर्द्वयविक्रमपाटितपरभटरणपाटवो झटिति ॥ १ ॥
शयनपरः कुर्यातामक्षारलवणभोजनावेतौ ।
यतमानसौ त्र्यहं किल संचरितब्रह्मचर्यौ च ॥ २ ॥
तूर्येण सह निगदितं सप्ताहं चैव मङ्गलस्नानम् ।

भूषणकृतिसहभुक्ती मेक्षासंबन्धिपूजा च ॥ ३ ॥
इति परिणयनानन्तरमाचरणीयं समस्तवर्णेन ।
नववासःपरिधानं पाठाधिकृतेरनध्यायः ॥ ४ ॥
मृदुभिरुपायैरेतां तस्मिन्निशि निर्जने वशीकर्तुम् ।
आद्ध्यादुद्यममिह मूकवदासीत केषांचित् ॥ ५ ॥
स्तम्भीभावे भर्तुः संमतिरिह नास्ति बाभ्रवीयाणाम् ।
ऽयहमेवं पश्यन्ती गाढं दूयेत सा यस्मात् ॥ ६ ॥
परिभवति पण्ढमिव तं स्तम्भत्वं यरुपदं समातनुते ।
तस्मादुपक्रमी स्यान्नतु यन्त्रं रोचयेत्तत्र ॥ ७ ॥
एवं स्याद्विश्रम्भः कन्याया न व्रतस्य भङ्गश्च ।
सति यन्त्रे व्रतभङ्गं स्त्रीयायामामनन्त्यार्याः ॥ ८ ॥
साम्ना प्रयोजयेदथ यन्त्रं परतस्त्रिरात्रतः सुभगः ।
कुसुमसमानां तासां सुकुमारोपक्रमेऽभिरुचिः ॥ ९ ॥
प्रसभमकृतविश्वासैर्यन्त्रायाद्रीयमानायाम् ।
नियतो भवति द्वेषो यन्त्रे पुरुषेऽथवा तासाम् ॥ १० ॥
युक्त्याऽपि यतः प्रसरं स्वयमुपलभते विशेत्तु तेनैव ।
यौवनतरलमभावं विद्यादस्याः प्रयत्नेन ॥ ११ ॥
कृत्वा सङ्गतिमस्या निजकरकमलेन पाणिकमलस्य ।
तत्र च सिद्धामेतां परिरम्भे साधयेद्बालाम् ॥ १२ ॥
सह्यत्वात्परिरम्भं क्षणमारचयेत्तु पूर्वकायेन ।
मृदु, कठिनोपक्रमतो भूयादेषा विरक्ताऽपि ॥ १३ ॥

---

१ 'त्रिरात्रमवचनं हि स्तम्भमिव नायकं पश्यन्ती कन्या निर्विद्येत परिभवेच्च तृतीयामिव प्रकृतिमिति बाभ्रवीयाः' का० सू० अ० ३ अ० २ सू० ४ । २ 'उपक्रमेत विस्रम्भयेच्च, न तु ब्रह्मचर्यमतिवर्तेतेति वात्स्यायन' सू० ५ । ३ 'कुसुमसधर्माणो योषितः सुकुमारोपक्रमाः, तास्त्वनधिगतविश्वासैः प्रसभमुपक्रम्यमाणाः संप्रयोगद्वेषिण्यो भवन्ति, तस्मात्साम्नैवोपचरेत्' सू० ६ ।

सिद्धां वै परिरम्भे दद्याद्वदनेन चारु ताम्बूलम् ।
अप्रतिपत्तौ तत्र च सांत्वनवाक्यैरिमां शपथैः ॥ १४ ॥
प्रतियाचनैः प्रपतनैश्चरणाम्बुजयोः सरोजरम्यास्याः ।
सङ्ग्राहयेदिदं खलु तामूचितमन्यकार्येऽपि ॥ १५ ॥
लज्जानिमग्नहृदया यदि वा रुष्टा महापराधेन ।
नातिक्रामति सुमुखी चरणनिपतनं क्षणं पुनः ॥ १६ ॥
अस्य तु दानावसरे मृदुचुम्बनमाचरेदसावुचितम् ।
आलापयेत्तु सिद्धां चुम्बनपरिरम्भयोरुभयोः ॥ १७ ॥
आकर्णनार्थमस्याः परिमितवर्णं मिताभिधेयं च ।
किंचित्पृच्छेत्कामी रहित इवैतस्य बोधेन ॥ १८ ॥
पृष्टे सकृदभिवत्ते यदि नेयं तदाऽसकृच्चरेत्पृच्छाम् ।
युक्तां सांत्वनया खलु नोद्वेगः स्याद्यथा तस्याः ॥ १९ ॥
तत्राप्ययावदन्तीं निर्बध्नीयाच्छुभेक्षणां रमणः ।
विपहन्ते पतिवचनं नैव नवोढाः स्वयं ब्रुवते ॥ २० ॥
निर्बध्यमानतायां प्रतिवचनं सा चरेच्छिरःकम्पैः ।
कलहेनैव विदध्यात्कम्पं शिरसोऽपि पद्माक्षी ॥ २१ ॥
इच्छसि मां नेच्छसि वा रुचितोऽहं तेऽथवा न संरुचितः ।
इति पृष्टा व्यवतिष्ठेत्सुचिरं वश्यः स्मरास्त्रस्य ॥ २२ ॥
निर्बध्यमानतायां कम्पो मूर्ध्नोऽत्र चानुकूल्येन ।
अत्र प्रवञ्च्यमाना विवदेदेर्णाहगेणाऽपि ॥ २३ ॥
विश्रब्धामुभयोर्वा कृत्वा स्वमखीमिहान्तराऽनुगुणाम् ।
कुर्यात्कथामसङ्गं नवोढा संस्तुता चेत्स्यात् ॥ २४ ॥
सख्याः कथामसङ्गे विहसेन्नतवक्त्रपङ्कजा बाला ।
अतिवादिन्यां तस्यां साक्षेपः स्याद्विवादस्तु ॥ २५ ॥
अनयैतत्परिकथितं कथयेत्साऽनुक्तमप्यधीराक्ष्याः ।
तूष्णीमासीत न वा तस्मिन्सत्यानुकूल्येन ॥ २६ ॥
निर्बन्धे सति नाहं वच्मीत्यव्यक्तमर्थतोऽपूर्णम् ।

प्रब्रूयाद्विहसन्ती पश्येत्तिर्यक्कदाचित्तम् ॥ २७ ॥
आलापनविधिरधिको यूना कथितो नवीनकान्तायाः।
श्रीवीरभद्रविदुषा निखिलधराचक्रशक्रेण ॥ २८ ॥
जातपरिचया तूष्णीं याचितमेतेन नागवल्ल्यादि।
अस्यान्तिके निदध्याद्भ्रीयाद्वोत्तरीयेऽस्य ॥ २९ ॥
युक्तां तथा छुरितकैरुपरि कुचस्वर्णकुम्भयोरुभयोः।
सद्यः स्पृशेदजस्रं विषयीभूतः स्मरास्त्रस्य ॥ ३० ॥
प्रियया निवार्यमाणो नैवं कुर्याद्यदा परीरम्भम्।
कुरुष्व ममेति कथयन्परिरम्भं कारयेदेषः ॥ ३१ ॥
आलिङ्गनसमये स्वं करकमलं नाभिदेशपर्यन्तम्।
व्यावर्तयेत्प्रसार्य हि हरिणदृशः शोभनाकारः ॥ ३२ ॥
आरोप्य स्वोत्सङ्गे कान्तां क्रमशोऽधिकं ततोऽप्यधिकम्।
सोपक्रमतां कलयेदतिपत्तौ भीषयेदेवम् ॥ ३३ ॥
दशनेन क्षतमधरे स्तनपृष्ठे नखरदन्तयोः कुर्यात्।
कृत्वा च स्वयमात्मनि सख्याः सविधे त्वया रचितम् ॥ ३४ ॥
कथयिष्यामि किमत्र त्वं वक्ष्यसि तासु जातहासासु।
इत्थं प्रतारयेत्तां वात्स्यायनेनैव ॥ ३५ ॥
उत्तररात्रिष्वधिकं विश्रम्भे हस्तयोजनं रचयेत्।
सार्वाङ्गिकं च चुम्बनमासङ्गः स्यात्करस्यैवम् ॥ ३६ ॥
विन्यस्तपाणिरूर्वोरुपरि च संवाहयेदिमां तत्र।
संवाहयेत्क्रमेण च सिद्धां तत्रोरुमूलेऽपि ॥ ३७ ॥
संवाहने निषिद्धे दोषो नास्तीति तां समाकुलयेत्।
स्थैर्ये तत्र विदध्याद्गुह्यस्थलसङ्गमङ्करतः ॥ ३८ ॥
रसनावियोजनादनु नीवीमोक्षं तथा परावृत्तिम्।
वस्त्रस्योर्वोर्मूले संवाहनमाचरेद्भूयः ॥ ३९ ॥
अन्यापदेशतः खलु कुर्यादन्यत्स्वकं तथाऽभिमतम्।
यन्त्रं प्रयोजयेन्न तु तत्कालं काप्यतिक्रम्य ॥ ४० ॥

तामनुशिष्याद्रमणः स्वस्य च तस्यां प्रदर्शयेद्रागम् ।
अनुवर्णयेन्मनोरथवृत्तीः पूर्वं समुत्पन्नाः ॥ ४१ ॥
प्रतिजानीयादग्रे स्वाचरणं तत्र चानुगुण्येन ।
साध्वसमस्याश्छिन्द्यात्प्रतिपत्नीभ्यः प्रयत्नेन ॥ ४२ ॥
इत्थं तस्याः कन्याभावं क्रमतो विधाय दूरेण ।
विगतोद्वेगं रचयन् भूयात्सोपक्रमः पुरुषः ॥ ४३ ॥
इति कन्याविश्रम्भणमुक्तं श्रीवीरभद्रदेवेन ।
आकर्ण्य यस्य कीर्तिं लज्जितमिह देवदेवेन ॥ ४४ ॥
इत्थं चित्तानुगतो बालामिह साधु साधयेद्बहुभिः ।
उचितोपायैरेवं रागस्तस्याश्च विश्रम्भः ॥ ४५ ॥
अत्यन्तमानुकूल्यं प्रतिकूलत्वं तथा च नात्यन्तम् ।
कन्यासिद्धौ हेतुस्तस्मान्मध्यस्थता युक्ता ॥ ४६ ॥
स्वस्य प्रीतौ हेतुर्मानविदानं च मानशीलानाम् ।
विश्रम्भणमधिगच्छन् कन्यानां जायते प्रीतः ॥ ४७ ॥
मन्दाक्षं[1] कन्यानामालक्षन्मन्दमाचरन् रागम् ।
वेद न तासां हृदयं पशुवत्परिभूयते तस्मात् ॥ ४८ ॥
सहसोपक्रान्तौ सा चित्ताविदुषा भयं तथा पीडाम् ।
उद्वेगं द्वेषं खलु सद्यो यातीति शास्त्रार्थः ॥ ४९ ॥
प्रीतिं साऽलब्ध्वा ननु तेनोद्वेगेन दूषिता बहुधा ।
पुरुषद्वेषं प्राप्ता विद्विष्टा स्याद्गतात्परतः ॥ ५० ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
कन्यायुक्ताधिकृतौ रचितोऽध्यायो द्वितीयोऽसौ ॥ ५१ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ तृतीये कन्यासंप्रयुक्ताधिकरणे द्वितीयोऽध्यायः ।

---

१ मन्दाक्षं लज्जाम् ।

## अथ तृतीये कन्यासंप्रयुक्ताधिकरणे तृतीयोऽध्यायः ।



अथ कथयत्यध्यायं तृतीयमात्मत्रयीस्फुरन्मार्गः ।
नेत्रत्रयीव शम्भोरनुपहताऽर्थत्रयी यस्य ॥ १ ॥
गुणवानपि धनहीनो मध्यगुणो वाऽथवा गुणै रहितः ।
पित्रादेः परतन्त्रः वरयेयुर्नैवमाद्यास्ते ॥ २ ॥
कन्याऽसुलभ्यतायां बाल्यादारभ्य रञ्जनं तस्याः ।
रचयेयुः स्वयमेते साऽपि तमिच्छेत्समीपे यः ॥ ३ ॥
इति घोटकमुखभणितिः तस्याश्चेहानुरञ्जनोपायाः ।
सहपुष्पावचयाद्या वात्स्यायनभाषिता ज्ञेयाः ॥ ४ ॥
मालाचरणं कृत्रिमदुहितृक्रीडा च पट्टिकालीला ।
पाको मुष्टिकलीलाऽऽकर्षक्रीडाऽङ्गुल्यिग्रहणम् ॥ ५ ॥
यष्टिककुन्तकविच्युतिरुपलक्रीडादिदेशसंबन्धि ।
तत्सात्म्यात्समयेषु च कुर्यादनया च चेटीभिः ॥ ६ ॥
उदकक्ष्वेडनकानि च मीलितकं लवणवीथिका चैव ।
अनिलाहुलिताडिकया साकं गोधूमपुञ्ज्या च ॥ ७ ॥
इति परिचयानुरूपं रचयेत्क्रीडास्तदीयसात्म्येन ।
प्रीतिं कुर्यादस्या विश्वस्ताभिः प्रयत्नेन ॥ ८ ॥
युञ्ज्यात्परिचयमस्या धात्र्याः कुर्यात्प्रियाणीह ।
सा प्रीता विदिताकृतिरप्रतिषेधे रतासङ्गे ॥ ९ ॥
अनभिहिता विदिताकृतिरभिदध्याचद्गुणानेव ।
एवं स्यादनुरक्ता कन्यैतस्मिन् गुणान् ततो ज्ञात्वा ॥ १० ॥
साधयतु कौतुकं वा कन्याहृदयानुकूल्येन ।
क्रीडाहेतुरपूर्वो विरलो योऽन्यासु कन्यकास्वस्ति ॥ ११ ॥
अस्याः साध्यो यत्नात्प्रेमाकांक्षाप्रकर्षेण ।
कन्दुकमनेकभक्त्या चित्रं कालेन नान्तरं बहुभिः ॥ १२ ॥
अन्यथान्यथ तथा रूपध्वनि योजयेदस्याः ।

गजदन्तदारुसूत्रैः पिष्टमधूच्छिष्टमृन्मुखैश्चैव ॥ १३ ॥
कृत्वा दुहितरमस्यै दद्यादेष प्रयत्नेन ।
साधनभूतं पाके स्थलमस्यै दर्शयेत्पुनः प्राज्ञः ॥ १४ ॥
काष्ठे च संप्रयुक्तौ मेषौ छागादिकं चैव ।
देवकुलानि तथाऽल्प गेहं मृद्विदलकाष्ठसंजातम् ॥ १५ ॥
शुकसारिकापिकानामपि लावककुक्कुटप्रभृतेः ।
पञ्जरकं सुविचित्रं शोभनमपि भाजनं तथा पयसाम् ॥ १६ ॥
एवं यन्त्रकवीणे तद्वदिहान्यन्मनोहारि ।
चन्दनकुङ्कुमहिङ्गुलमनःशिलालक्तकादिकं श्यामम् ॥ १७ ॥
पूगफलं ताम्बूल श(भ)क्त्या कालोद्भवं दद्यात् ।
यस्य प्रकाशदाने भवति विमानं द्वयोः सुहृद्वर्गे ॥ १८ ॥
तत्प्रच्छन्नं देयं भयहेतुर्दर्शनीयश्च ।
कुर्यात्तथा यथेयं सर्वाभिप्रायपूरकं वेत्ति ॥ १९ ॥
वीक्षणसुखदं दद्याद्रुसं तद्वस्तुजातं तु ।
कथयेदस्याः पुरतो देयद्रव्ये परस्पृहामधिकाम् ॥ २० ॥
कथया रञ्जनमुचितं रागे प्रच्छन्नं प्रकाशं वा ।
आश्चर्यदर्शनेच्छा यदि तस्यास्तदिदमिन्द्रजालाद्यैः ॥ २१ ॥
चेतोऽनुरञ्जनीयं कल्या तत्रानुरक्तायाः ।
गीतरता गीतवरैराश्चर्युज्या कौतुकैस्तथा चान्यैः ॥ २२ ॥
आपीडैरतिचित्रैर्भूषणदानैरदोषश्चेत् ।
पुरपान्तरेष्वभिरतामेना धात्रेयिका तथा चास्याः ॥ २३ ॥
चातुःषष्टिकयोगान्निपुणतया ग्राहयेन्निरतः ।
रतिकौशले च तस्याः ख्यात स्यादेवमात्मनस्तेन ॥ २४ ॥
स्यादयमुदारवेषोऽनुपहतसंदर्शनश्चैव ।
जानीयाद्भावरतिं स्वस्मिंस्तस्यास्तथेङ्गिताकारैः ॥ २५ ॥

१ 'आश्चयुजीकौतुकै' ग, 'गीतवरैराश्चर्यं युञ्ज्यात्कुतुकैस्तथा चान्यै' ख. । २ 'स्वादारवेषश्च' ख. ।

भावं माप्ता अपि या निरता नैवाभियोगेषु ।
पश्यति न सम्मुखं सा दृष्टा मन्दाक्षवश्यतां तनुते ॥ २६ ॥
अङ्गं स्वस्य छलतः प्रकाशयेत्तत्तदपदेशेन ।
योन्तं छन्नं मत्तं पश्यति दृष्टेः पथिच्युतं यत्नात् ॥ २७ ॥
पृष्टा किञ्चित्सस्मितमव्यक्तं भाषतेऽपूर्णम् ।
मन्दं मन्दं निकटे स्थानममुष्याभिनन्दतीह चिरम् ॥ २८ ॥
दूरे पश्यतु मामिति मत्वा विकृतं च भाषते कञ्चित् ।
मुञ्चति च न तं देशं दृष्ट्वा किंचिच्च हासकृद्भवति ॥ २९ ॥
मन्दं तत्र स्थितये कथया समयं क्षिपत्युचितम् ।
बालस्याङ्कगतस्य च परिरम्भणचुम्बने मुहुः कुरुते ॥ ३० ॥
तिलकविशेषान्निपुणं रचयति परिचारकादीनाम् ।
सावष्टम्भा परिजनवर्गे लीलाश्च दर्शयत्यधिकाः ॥ ३१ ॥
तन्मित्रेषु च कुरुते विश्वासं वाक्यमेतेषाम् ।
बहु मन्यते करोति च तद्भृत्यैः प्रीतिमादराज्ञिपताम् ॥ ३२ ॥
द्यूतं कथा च कुरुते प्रभुरिव चैतान्नियुङ्क्ते च ।
नायककथां परस्मै कथयत्स्वेतेषु कर्णयोः कुरुते ॥ ३३ ॥
प्रविशति नायकवेश्म च धात्रीकथनेन संहृष्टा ।
तामन्तरा विधाय च तेन सह द्यूतभाषणे कर्तुम् ॥ ३४ ॥
इच्छत्यभूषिताऽस्य च दृष्टिपथं दूरतस्त्यजति ।
अभ्यर्थिताऽमुनाऽपि च कर्णाभरणाङ्गुलीयके मालाम् ॥ ३५ ॥
सख्या हस्ते यच्छति गात्रादवमुच्य धैर्येण ।
धारयति तेन दत्तं नित्यं स्रक्चन्दनादिकं भूषाः ॥ ३६ ॥
खिन्ना परवरकथया तत्पक्षैर्वर्जयेत्संगम् ।
दृष्ट्वा तस्या भावानाकारानिङ्गितानि पद्माक्षाः ॥ ३७ ॥
कन्यासंयोगार्थं योगान्न संचिन्तयेदुचितान् ।
बालां लीलाद्रव्यैर्यौवनपदशालिनीं कलानिचयैः ॥ ३८ ॥

१ 'कान्त' ख. ।

विश्वास्य वैत्सलामपि गृह्णीयात्संग्रहान्निपुणः ।
श्रीवीरभद्रकृतिना शास्त्रेऽस्मवाणशासनानुसृते ॥
कन्यायुक्ताधिकृतौ रचितोऽध्यायस्तृतीयोऽसौ ॥ ३९ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ तृतीये कन्यासम्प्रयुक्तकेऽधिकरणे तृतीयोऽध्याय ।

---

## अथ तृतीये कन्यासंप्रयुक्तकेऽधिकरणे चतुर्थोऽध्यायः ।

अध्यायमथ चतुर्थं सार्थकमाख्यातुमुद्यमं कुरुते ।
गीतस्तीरे जलधेरर्थिमत्यर्थिनारीभिः ॥ १ ॥
दर्शितचेष्टाकारामभियुञ्जीतेह हेतुभिः कन्याम् ।
गृह्णीयात्करकमलं क्रीडाया विवदमानायाः ॥ २ ॥
आलिङ्गनं विद्ध्यात्स्पृष्टकमुखमुक्तया रीत्या ।
एवं भवति वशे सा ज्ञातस्मरशास्त्रतत्त्वस्य ॥ ३ ॥
पत्राणा छेद्यादौ स्वाभिप्रायस्य सूचये मिथुनम् ।
संदर्शयेदिहास्या एवं चान्यत्तथा विरलम् ॥ ४ ॥
जललीलाया दूरे पयसि निमग्नो विधाय तत्स्पर्शम् ।
उन्मज्जेन्मज्जनभुवि कुतुकी पुरतः सरोजाक्ष्याः ॥ ५ ॥
नवपत्रिकादिषु चरेत्सविशेषं भावसंकथा निरतः ।
दुःखस्यात्मगतस्य च कथनमिह स्यादनिर्वेदात् ॥ ६ ॥
अपदेशात्प्रेक्षणके स्वजनसमूहेऽथवा स्थितो निकटे ।
छलतः कुर्यात्स्पर्शं पीडनमस्याः पदो रचयेत् ॥ ७ ॥
शनकैरेकैकाङ्गुलिमभिमृशति नखाग्रघट्टनं कुरुते ।
सिद्धा तत्र पदात्पदमभिकाक्षेदभ्यसेच्चच ॥ ८ ॥
शौचे चरणाम्बुजयोरङ्गुलिसंदंशपीडनं रचयेत् ।
लक्ष्यस्तत्र विकारो द्रव्यग्रहणे विसर्गे च ॥ ९ ॥

---

१ ' वत्सला प्रौढा ' इति जयमङ्गला ।

आचमनार्थपयोभिः कार्यः सेकोऽप्यनेन वामाक्ष्याः।
द्वन्द्वं तमसि च तिष्ठन्क्षान्ति कुर्यात्तथैकशय्यादौ ॥ १० ॥
तत्र च भावं कथयेन्न स्यादेषा यथा समुद्विग्ना।
जानीयादपि भावं भाविन्या भूरि भावज्ञः ॥ ११ ॥
एकान्ते वक्तव्यं मम कियदस्तीति बोधयन्कथयेत्।
स्वप्नादिभावयुक्तं जिज्ञासुर्भावमेतस्याः ॥ १२ ॥
जानीयात्तद्भावं वक्तव्यान्पारदारिके तत्र।
ज्ञात्वा भावममुष्या उक्त्वा व्याधिं नयेद्गेहम् ॥ १३ ॥
अभियोगोऽधिगतायाः शिरसः संपीडने भवेत्स्वस्य।
संयोजयेत्तदीयं करमवलम्ब्य स्वनेत्रादौ ॥ १४ ॥
भिषजा कन्यासाध्यं भेषजमिदमत्र साधु निर्दिष्टम्।
इति कुर्विति कथयित्वा कर्मैनां कारयेत्प्राज्ञः ॥ १५ ॥
पुनरागमननिबन्धं कृत्वा शपथैः पुनस्तयाऽनुमतैः।
विसृजेदेनां कार्यो[1] राग इहासौ त्रिरात्रादौ ॥ १६ ॥
गोष्ठीवृद्धिरभीष्टा द्रष्टुमिहाभीक्ष्णमागमे तस्याः।
अभियुक्तो विश्रम्भे स्यादन्याभिरसावधिकम् ॥ १७ ॥
वाचा तु नैव कथयेदेवं स्याद्गूढभावमानोऽपि।
कन्याविगलितभावाद्घोटकमुख आह ह्याचार्यः ॥ १८ ॥
मन्येत यदि च सिद्धा बहुधैनां स्यादुपक्रमेऽभिरतः।
तत्कालेनासिद्धा सहते सोपपत्रमं यस्मात् ॥ १९ ॥
नार्यः साध्वसमन्दा निशि वा तमसि प्रदोषवेलायाम्।
सुरतव्यवसायिन्यो जायन्ते रागवत्यश्च ॥ २० ॥
पुरुषप्रतिषेधं न च भूरि चरन्तीति तेषु कालेषु।
कुर्यादुपक्रमेच्छां कथितः प्रायः प्रवादोऽयम् ॥ २१ ॥
सख्या धात्रेय्या वा लाभादर्थस्य भावकारिण्या।
तमकथयन्त्या कार्यं बहिरेनां निर्गतां सहिताम् ॥ २२ ॥

१ 'कार्योपगम' इति ख.।

एकाभियोगविरहे कुर्यादभियोगमङ्कमारोप्य।
पूर्वोक्तेन च विधिना मतमेतत्कामशास्त्रस्य ॥ २३ ॥
यात्रोत्सवयोर्यज्ञे व्यसने प्रेक्षारते जने निखिले।
सोपक्रमोऽन्यदाऽपि हि भूयाद्विज्ञातभावायाम् ॥ २४ ॥
अवधूतभावा योषा देशे काले यथेहित निपुणैः।
व्यावर्तते नियुक्ता नेति मतं कामशास्त्रस्य ॥ २५ ॥
एकपुरुषाभियोगा इत्थ श्रीवीरभद्रदेवेन।
वात्स्यायनोपदिष्टा आर्यावृत्तेन निर्णीताः ॥ २६ ॥
मन्दापदेशजाता गुणवत्यपि कन्यका धनैर्हीना।
पितृहीना ज्ञातिकुले तिष्ठन्ती वा स्वयं रचयेत् ॥ २७ ॥
सा गुणवन्तं शक्त सुदर्शनं प्रीतिसंयुतं रचयेत्।
इन्द्रियवशमुपचारैर्गुर्वनपेक्ष चरेत्स्ववशे ॥ २८ ॥
एना सह धात्र्याद्यैर्माताऽभिमुखीं चरेत्पुनस्तस्याः।
विजने तथा विकाले तदुपस्थानं सपुष्पायाः ॥ २९ ॥
संवाहनादिकर्मणि कौशल्यमथवा कलाकलापेऽस्मै।
सदर्शयेत्कथा अपि कुर्यात्सात्म्येन तस्यैव ॥ ३० ॥
कथितानुपक्रमेषु च बालायामाचरेदसौ सर्वान्।
अनुरक्ताऽपि न कुर्यात्स्वयमभियोगं विशालाक्षी ॥ ३१ ॥
सौभाग्य विजहाति हि कुरुते येऽभियोगमेणाक्षी।
इत्याचार्यनिरुक्त्या स्वयमभियोग चरेन्नैव ॥ ३२ ॥
तस्याभियोगमेषा संगृह्णीयादिहानुलोम्येन।
विकृतिं नैव भजेदथ चुम्बनपरिरम्भयोर्बाला ॥ ३३ ॥
श्लक्ष्णं प्रतिगृह्णीयादाकार चारु जानतीवेयम्।
यूना मनोजभावाद्वदनग्रहणे बलाद्रचिते ॥ ३४ ॥
अभ्यर्थनासु च रतौ कुर्यात्सदर्शनं भवेद्गुह्ये।
अभ्यर्थिताऽतिविवृता न स्यात्सुरतादृते नारी ॥ ३५ ॥
अव्यावर्तकमेषा बुद्धा चैवानुरागमेतस्य।

अभियुञ्जाना जह्यात्कन्याभावं सरोजाक्षी ॥ ३६ ॥
कन्याभावविमुक्ता विश्वास्येषु प्रकाशयेदेषा ।
स्वोपावर्तनमित्थं कथितं श्रीवीरभद्रदेवेन ॥ ३७ ॥
अभियुज्यमानतायां कन्या मन्येत यं सुखोपायम् ।
अनुकूलत्वाद्वश्यं परिग्रहं तस्य सा कुर्यात् ॥ ३८ ॥
अनपेक्ष्य गुणसमूहं रूपौचित्ये च लोभतोऽर्थस्य ।
पतिमाचरति सपत्नाढ्यौति तथाऽपहायापि ॥ ३९ ॥
तत्र गुणाढ्यं वश्यं शक्तं बलवन्तमर्थिनं पुरुषम् ।
हेतुभिरभियुञ्जानं न प्रतिलोमे मनः कुर्यात् ॥ ४० ॥
युक्तं गुणैरनेकैर्हित्वा साधारणं पतिं नार्यः ।
गृह्णन्ति वश्यतायां निर्गुणमपि निर्धनं चैव ॥ ४१ ॥
धनिनो दाराः प्रायो बहवो निरवग्रहा बाह्ये ।
सत्युपभोगे विपुले निर्विश्रम्भा बहिः सुखिनः ॥ ४२ ॥
नीचो यस्त्वभियोक्ता पलितो वा विदेशगतिशीलश्च ।
संयोगमेष नार्हति युक्तः पत्न्याऽप्यपत्यैश्च ॥ ४३ ॥
यश्च यदृच्छावशतो नियोगकर्ता तथाऽक्षदण्डाभ्याम् ।
नार्हति सोऽपि मृगदृशां संयोगं रागसाध्यं हि ॥ ४४ ॥
पुरुषोऽभियोक्तृताढ्यः सर्वगुणापेक्षया मतः श्रेष्ठः ।
पुरुषाभियोगतः खलु रागः संवर्धते स्त्रीणाम् ॥ ४५ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
कन्यायुक्ताधिकृतौ रचितोऽध्यायश्चतुर्थोऽसौ ॥ ४६ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ तृतीये कन्या-
संप्रयुक्तकेऽधिकरणे चतुर्थोऽध्यायः ।

---

## अथ तृतीये कन्यासंप्रयुक्तकेऽधिकरणे पञ्चमोऽध्यायः ।

अथ पञ्चममध्यायं प्रपञ्चयत्येष दानमानेषु ।
यस्यालम्बनभावादाकूपारं यशो लोकः ॥ १ ॥

प्राचुर्येणालाभे विविक्तभावस्य कन्यकाधात्रीम् ।
नीत्वोपसर्पयेदिह भूयादेवं वशीभावः ॥ २ ॥
सा चैनामज्ञाता भूत्वा कपटेन नायकस्यास्य ।
अनुरञ्जयेदजस्रं तस्य गुणैर्वर्ण्यमानैस्तु ॥ ३ ॥
रुच्या तस्याः पुनरियमस्य गुणान्वर्णयेन्मुहुर्बहुधा ।
वरयित्रन्तरदोषान्प्रकाशयेद्रागबोधाय ॥ ४ ॥
दोषान्प्रकाशयेदस्य पित्रोरिह तथैव बन्धुवर्गस्य ।
लोभं गुणेष्वबोधं निरपेक्षत्वं च चापल्यम् ॥ ५ ॥
रुच्या स्वकीयया किल भर्तारं प्राप्य याः शुभोदर्काः ।
अस्याः प्रदर्शयेत्ताः शकुन्तलाप्रादितः कृत्वा ॥ ६ ॥
युक्ता महाकुलेष्वपि या विद्विष्टाः सुदुःखितास्त्यक्ताः ।
प्रतिपत्नीकृतदुःखा अस्याः संदर्शयेत्ताश्च ॥ ७ ॥
आयतिमत्ता सुखिता निरन्तरं चैकचारिता रागः ।
वश्यत्वं च रमण्या इत्यादीन् वर्णयेदस्यै ॥ ८ ॥
अस्मिन्मनोरथेऽस्याः सा त्रसलज्जे तथैव चापायम् ।
छिन्द्याद्धेतुभिरेषा दूतीकल्पेव धात्रेयी ॥ ९ ॥
आदास्यते बलात्त्वा त्वदननुमत्यैव नायकः स्मरभूः ।
स्यादेवं सुगृहीतं कथयेदित्थ रहस्येनाम् ॥ १० ॥
एना च प्रतिपन्नामुचितस्थलवर्तिनीं मनोरमणः ।
आनाय्याग्निं श्रोत्रियगेहाद्दर्भान्परिस्तीर्य ॥ ११ ॥
हुत्वाऽग्निं स्मृतिविधिना परिणयमस्याश्चरेदसावुचितम् ।
पश्चात्प्रकाशयेदिति पित्रोः पुरतः कृतार्थत्वात् ॥ १२ ॥
परिणयविधयः क्लृप्ताः साक्षीकृत्येह ये पुनः शिखिनम् ।
आचार्याणां वचनादतिवृत्तिं न प्रयान्त्येते ॥ १३ ॥
एना च दूषयित्वा शनकैरवबोधयेदसौ स्वजने ।
तद्बान्धवाश्च तस्मै दद्युरिमां दण्डभीत्यादेः ॥ १४ ॥

१ 'हस्तस्यैव' ख. ।

प्रीत्यादिभिरथ तानिह कुर्यान्निजवश्यतामनुप्राप्तान् ।
कुर्यात्ततोऽग्निसाक्ष्य गान्धर्वोऽय विवाहः स्यात् ॥ १५ ॥
अप्रतिपन्नामन्तश्चारिण्या प्रीतया स्त्रियाऽऽनाय्य ।
वलतो हि सावकाश छलतः स्यादग्निसाक्ष्यं तु ॥ १६ ॥
ज्येष्ठ भ्रातरमस्या वयसा तुल्य पराङ्गनानिरतम् ।
वेश्यासु वा प्रसक्त दुष्करसाहाय्यदानेन ॥ १७ ॥
प्रियकरणैश्च सुदीर्घ काल ह्यनुरञ्जयेत्तदन्ते तु ।
स्वाभिप्राय तस्मै कथयेत्प्रायो युवानो हि ॥ १८ ॥
शीलस्य व्यसनस्य च साम्ये वयसो वयस्यवर्गाणाम् ।
अर्थे जीवितमपि निजमत्यक्तव्य न जानन्ति ॥ १९ ॥
आनाय्य तेन वलतश्छलतो वश्येन सावकाशे ताम् ।
तदनु मनोरथसिद्धौ कुर्यात्पूर्वेण यत्तुल्यम् ॥ २० ॥
धात्रेयिकया यदि वा मदनीय साधु पाययित्वैनाम् ।
वलतश्छलतः स्वान्तिकमानाय्याप्राप्तसज्ञा तु ॥ २१ ॥
दूषयति तत्पर स्यात्तुल्य पूर्वेण वह्निकार्यं तु ।
सुप्ता चैका यदि वा वरयित्वा नष्टसज्ञा ताम् ॥ २२ ॥
दूषयति चरति परतः पूर्वसमान विवाहकार्यं तु ।
उद्यानादिषु यान्तीं यदि वा हरतीह ता कान्तः ॥ २३ ॥
एते विवाहयोगाः प्रभुणा श्रीवीरभद्रदेवेन ।
वात्स्यायनानुरोधात्कथिताः क्रमशो विविच्येह ॥ २४ ॥
पूर्वः पूर्वो मुख्यो योगेष्वेतेषु धर्मचिन्तायाम् ।
तस्मादर्थात्सिद्धं पूर्वाभावे पराचरणम् ॥ २५ ॥
सिद्धा यतो विवाहाज्जनयन्त्यनुरागमुत्कट सुखदम् ।
गान्धर्वो मध्योऽपि हि सद्योगात्पूजितस्तस्मात् ॥ २६ ॥
सुखदोऽनधिकक्लेशः प्रचुराचरणः पुनर्महापुरुषैः ।
अपि चानुरागबहुलो गान्धर्वः पूज्यते सद्भिः ॥ २७ ॥

श्रीवीरभद्रकृतिना शास्त्रेऽस्मिन्बाणशासनानुसृते ।
कन्यायुक्ताधिकृतौ पञ्चम इह निर्मितोऽध्यायः ॥ २८ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ तृतीये कन्या-
संप्रयुक्तकेऽधिकरणे पञ्चमोऽध्याय ।

समाप्तं चेदं तृतीयं कन्यासंप्रयुक्तं नामाधिकरणम् ।

---

## अथ चतुर्थे भार्याधिकारिकेऽधिकरणे प्रथमोऽध्यायः ।



अधिकरणेऽथ चतुर्थे घटते भार्याधिकारिके चतुरः ।
चतुरुदधितीरगामी निद्रां नोपैति यद्विधुरः ॥ १ ॥
अध्यायद्वयमस्मिन् प्रथमे तत्रैकचारिणीवृत्तम् ।
उक्ता प्रवासचर्या चरमे वृत्तं गरिष्ठादेः ॥ २ ॥
वृत्तं पुनर्भुवोऽपि च तद्वदिहास्त्येव दुर्भगावृत्तम् ।
आन्तःपुरिकं पुंसः प्रतिपत्तिर्भूरिनारीषु ॥ ३ ॥
संगृह्येत्थमिहार्थानधिकरणेऽस्मिन्नसौ चतुर्थे तु ।
कुरुते प्रथमाध्यायं विशदं विशदं यशो यस्य ॥ ४ ॥
भार्यैकचारिणी या दृढविश्रम्भाऽनुकूलमाश्रित्य ।
वर्तेत देवतुल्यं भर्तरि सा सर्वभावेन ॥ ५ ॥
संमत्याऽस्य निजात्मनि चिन्तां कलयेदसौ कुटुम्बानाम् ।
वेश्म च शुचि संमृष्टस्थानं विरचितविविधकुसुमम् ॥ ६ ॥
संश्लक्ष्णभूमिभागं हृदयाह्लादक्षमेक्षणं चैव ।
त्रिषवणविरचितबलिविधिपूजितदेवाश्रमं चैव ॥ ७ ॥
गोनर्दीयः कथयति चित्तग्रहणक्षमत्वमेतस्य ।
न ह्येतावति सति तच्चित्तग्रहणे परापेक्षा ॥ ८ ॥
गुरुषु च मन्त्रिषु भृत्ये नायकभगिनीषु तत्पतिष्वपि च ।
प्रतिपत्तिः कर्तव्या यथार्हतः पद्मपत्राक्ष्या ॥ ९ ॥
परिपूते च स्थाने हरितशाकस्य वप्रमादध्यात् ।

इक्षुस्तम्बान् जीरकसर्षपमजमोदकं चैव ॥ १० ॥
शतपुष्पां कुब्जकमपि कुरुण्टकं मल्लिकां तथा जातीम् ।
नवमालिकां जपामपि नन्द्यावर्तं परं कुसुमम् ॥ ११ ॥
रचयेदसौ प्रयत्नात्फलसुमवृक्षांश्च वालकोशीरम् ।
ऊर्जितमशनतृणादि च वृक्षवने स्थण्डिलं रचयेत् ॥ १२ ॥
देशे सर्वसमाने कूपं वा दीर्घिकां रचयेत् ।
एवं कूपादीनां सर्वमनुष्योपयोगः स्यात् ॥ १३ ॥
अस्मै रुचितमिदं स्याद्द्वेष्यमिदं पथ्यमीदृशं नेति ।
विद्याद्भोजनवस्तुनि हृद्या रमणस्य पश्चात्सी ॥ १४ ॥
वहिरायान्तं श्रुत्वा स्वरैः सज्जा गृहान्तरा तिष्ठेत् ।
प्रक्षालयेत्तदङ्घ्री स्वयमप्नुद्याथ दासीस्तु ॥ १५ ॥
एतस्यागमने यत्किमपि निदानं विचिन्तयेत्तदसौ ।
तत्कर्तुं च सयत्ना भूयाद्दुःसाध्यमप्युचितम् ॥ १६ ॥
कुलटा कुहकेक्षणिका श्रवणा ह्यथ मूलकारिका चैव।
अपि भिक्षुकी स्वयमिमाः संसर्गं वर्जयेन्नित्यम् ॥ १७ ॥
न स्यान्मुक्तालङ्कृतिरेषा पुरतः स्वकीयरमणस्य ।
प्रेमार्थिनी प्रियेण च सालङ्कृतिरावसेद्विजने ॥ १८ ॥
कुर्वाणं व्ययमधिकं रहसि निषेधयेदसद्व्यये सक्तम् ।
गोष्ठीं सह च सखीभिर्गमनं यज्ञे विवाहादौ ॥ १९ ॥
कुर्यात्तेनानुमता क्रीडां कुर्यात्तदानुलोम्येन ।
शयनं पश्चाद्रचयेज्जागरणं पूर्वमेवास्मात् ॥ २० ॥
सुप्तस्य न प्रबोधनमाचरणीयं विना महाकार्यम् ।
आहारागारमयो सुदर्शनीयं च गोप्यं स्यात्[१] ॥ २१ ॥
नाधिक्षेपः कार्यः कलुषितया नायकाचारे ।
मित्रजनमध्यवर्त्ति ब्रूयादेकाकिनं वापि ॥ २२ ॥
न स्यान्मूलकृदेषा भूयादेवं महानविश्वासः ।

---

१ 'आहारासंदर्शनमात्माहारश्च गोप्य स्यात्' इति ख. ।

गोनर्दीयाचार्यः कथयत्येवं विचार्यैव ॥ २३ ॥
दुर्व्याहृतं परिहरेन्न च कुर्याद्दुर्निरीक्षितं निपुणा ।
अन्यत्र मन्त्रणं न च वृत्तिं द्वारप्रदेशे च ॥ २४ ॥
प्राङ्गणविविक्तयोरपि सुचिरं वृत्तिश्च चारु वर्ज्या स्यात् ।
दन्ते रागः कार्यो वार्यौ दुर्गन्धपङ्कौ च ॥ २५ ॥
द्वारनिरीक्षणमनिशं न चरेन्न च कूटमन्त्रणं च कलिम् ।
एवं स्मृतिविनिषिद्धा नग्नस्नानादयस्त्याज्याः ॥ २६ ॥
बहुभूषणानुलेपा बहुतरकुसुमोल्बणांशुकाभरणा ।
भूयाद्भावाभिज्ञा वेषेऽवैहारिके नारी ॥ २७ ॥
वैहारिके तु वेषे भूयात्तनुशुक्लपट्टवस्त्राढ्या ।
मितभूषा मितकुसुमा मिततरदेहाङ्गरागा च ॥ २८ ॥
अनुवृत्तिः कर्तव्या शुभया भर्तृव्रतोपवासादेः ।
तत्र निषेधोद्युक्तः प्रतिषेद्धव्यः प्रणामाद्यैः ॥ २९ ॥
मृद्विदलकाष्ठकृत्तिजलोहमयानां च भाण्डानाम् ।
काले कार्यं ग्रहणं तेन हि लाभः समर्घः स्यात् ॥ ३० ॥
एवं लवणस्नेहौ गन्धद्रव्यादि दुर्लभं यत्तु ।
कर्तव्यं प्रच्छन्नं धारणमेतस्य कृत्याय ॥ ३१ ॥
मूलकपालङ्क्यादेर्दमनकवार्ताकसूरणादीनाम् ।
बीजग्रहणं काले, काले वापश्च कर्तव्यः ॥ ३२ ॥
स्वव्यवहृतेः परेभ्यो नाख्यानं नापि भर्तृमन्त्रस्य ।
कुर्यादन्यस्त्र्यधिकमतिशयमात्मीयमानादेः ॥ ३३ ॥
आयव्ययमगणनमपि कुर्यात्पक्षमासवर्षादेः ।
भुक्तावशिष्टगोरसगुडतैलात्सारमादध्यात् ॥ ३४ ॥
कार्पाससूत्रकर्तनमारचयेत्सा स्वतोऽथ वा परतः ।
सग्रहणं शिक्यादेरवेक्षणं कण्डनादीनाम् ॥ ३५ ॥

---

१ 'भूषा स्युः शुक्लपट्टवस्त्राद्या' ख. । २ 'भुक्तावशिष्टाद्गोरसात्सारग्रहण, तथा तैलगुडयो' इति वात्स्यायनसूत्रम् ।

उपयोजनं विरचयेत्तुपकणतुच्छान्यवस्तुजातस्य ।
वेतनभरणज्ञानं भृत्यानां साधु कर्तव्यम् ॥ ३६ ॥
कृषिपाशुपाल्यचिन्ता पेषणचिन्ता तथोचिता कार्या ।
सति संभवेऽप्यवेक्षणमाधेयं मेषमुख्यानाम् ॥ ३७ ॥
पिण्डीकरणं विध्यादैवसिकस्य व्ययस्य चावेक्षी ।
जीर्णानां वस्त्राणां रक्षा वन्द्यादिदानाय ॥ ३८ ॥
आसवकुम्भीप्रभृतेः स्थापनमुचितं तु शूद्रभार्यायाः ।
क्रयविक्रयाद्यवेक्षणमुक्तं सर्वासु नारीषु ॥ ३९ ॥
स्रक्चन्दनादिपूजा कर्तव्या कान्तमित्रवर्गस्य ।
परिचर्या च विधेया नायकपित्रोः प्रयत्नेन ॥ ४० ॥
तत्परतन्त्रीभावो नोत्तरदानं तथा समारचयेत् ।
आलापं रचयेदिह परिमितमेवाप्रचण्डं च ॥ ४१ ॥
नोच्चैर्हासः कार्यः स्वसखीवर्गेऽपि भावशालिन्या ।
स्वस्य हिताहितकल्पं जानीयान्नायकस्यैतत् ॥ ४२ ॥
नोत्सेकः स्याद्भोगे दाक्षिण्यं परिजने सदा कार्यम् ।
दानं पृष्ट्वा कार्यं नायकमपि बन्धुवर्गेषु ॥ ४३ ॥
नैपुण्यं रचनीयं योगे सांयोगिके तथा बहुधा ।
कर्तव्यश्च नियोगः कर्मण्युचिते सुहृत्प्रभृतेः ॥ ४४ ॥
उत्सवसमये पूज्याः सुहृदस्तद्वच्च परिजनप्रभृतिः ।
इति वृत्तं निर्णीतं प्रभुणा पतिदेवतानां हि ॥ ४५ ॥
भर्तुः प्रवासकाले केवलमङ्गल्यभूषणा भूयात् ।
देवोपवासनिरता विद्याद्वार्ता सदैवास्य ॥ ४६ ॥
शय्यां गुरुजनसविधे निजभवनावेक्षणं यता रचयेत् ।
कार्येषु प्रतिपत्तिः स्यादनुमत्या गुरूणां हि ॥ ४७ ॥
कान्तेनाभिमतानां स्यादर्जनमत्र चार्थजातानाम् ।
प्रतिसंस्कारः कार्यः पूर्वचितस्यार्थजातस्य ॥ ४८ ॥

---

१ 'नासक्ता' इति ख. ।

उचितो व्ययो विधेयः कर्मण्यावश्यके शुभाननया ।
पतिनाऽऽरब्धगृहादेः पूर्तौ यत्नो विधेयश्च ॥ ४९ ॥
विनोत्सवं व्यसनं वा जातिकुले नाचरेदसौ यात्राम् ।
व्यसनादौ नायकजनसहिताया न स्थितिः सुचिरम् ॥ ५० ॥
नो परिहेयो वेषो यानेऽप्युचितः प्रवासकान्तस्य ।
उपवासादेः करणं प्राप्यानुज्ञां गुरूणां हि ॥ ५१ ॥
आप्यायनं च कुर्यात्क्रयविक्रयकर्मणा ह्यसौ सारे ।
परिचारकैस्तयाऽऽप्तैरनुगतिरस्या विधेया स्यात् ॥ ५२ ॥
शक्त्या व्ययतुलायां तनुतनुरेषा चरेत्पुनर्यत्नम् ।
तादृग्वेषाऽऽत्मानं दर्शयति स्वागते कान्ते ॥ ५३ ॥
अथ रचयेदिह पूजां यासां स्वीकार आगमायास्य ।
परितोषयेत्स्वकान्तं रचितैरुचितोपचारैश्च ॥ ५४ ॥
इत्थं प्रवासचर्यां रचयेदिहैव नारीणाम् ।
विस्तारो न विरचितो धर्मे वात्स्यायनानुसृते ॥ ५५ ॥
या सद्वृत्तौ कुरुते यत्नं हिततत्परा स्वकान्तस्य ।
कुलयोषाऽथ पुनर्भूर्वेश्या वाऽप्येकनारी तु ॥ ५६ ॥
पुरुषार्थत्रयलाभस्तस्याः स्यात्स्थानलाभशालिन्याः ।
भर्ता रमते सततं प्रतिपत्नीनामखेदेन ॥ ५७ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽनमथबाणशासनानुसृते ।
भार्याधिकारिकेऽस्मिन्नाद्योऽध्यायः कृतः साङ्गः ॥ ५८ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ चतुर्थे भार्याधि-
कारिकेऽधिकरणे प्रथमोऽध्यायः ।

---

## अथ चतुर्थे भार्याधिकारिकेऽधिकरणे द्वितीयोऽध्यायः ।

भार्याधिकारिकेऽस्मिन्नध्यायस्य द्वितीयताभाजः ।
अद्वयदोर्द्वयशाली रुचिरोद्योतं समातनुते ॥ १ ॥

---

१ 'काले' ख. । २ 'भर्तरि मानश्चास्या' प्रतिपत्नीनां विशेषेण' ख. ।

वैदग्ध्यस्य ख्यापनमथ भक्तेः परिशीलनं सदा रचयेत्।
आदित एव सपत्नीपरिहारेच्छा यदा प्रबला ॥ २ ॥
अधिवेदने निमित्तं जाड्यं दुःशीलता प्रजानुदयः।
नैयमिकः स्त्रीप्रसवो दौर्भाग्यं नायकश्चपलः ॥ ३ ॥
पुत्रार्थिनी तु भर्तुः परिणयमेषा स्वयं समारचयेत्।
अधिकत्वं तदवधिकं स्वस्मिन्कुर्याद्यथाशक्ति ॥ ४ ॥
भगिनीमिव तां पश्येद्रचयेत्प्रादोषिकं तथा च विधिम्।
तस्या नायकविदितं सातिशयं यत्नमास्थाय ॥ ५ ॥
सौभाग्योत्थं वैकृतमुत्सेकं न वाद्रियेतास्याः।
रचयेदपि चोपेक्षां भर्तरि जातप्रमादायाः ॥ ६ ॥
स्वयमस्या इह बोधो भूयादिति मन्यते चार्थे।
तत्रादरतः शिक्षा दद्यान्ननु दुष्प्रमेयेऽपि ॥ ७ ॥
रहसि विशेषानधिकान् पतिसंश्रवणे प्रकाशयेद्यत्नात्।
तदपत्येष्वविशेषः परिजनवर्गेऽनुकम्पा च ॥ ८ ॥
तस्या मित्रे प्रीतिस्तज्ज्ञातिषु चातिसंभ्रमः कार्यः।
आत्मज्ञातिषु रचयेन्नात्यादरमादृताऽजस्रम् ॥ ९ ॥
बह्वीभिर्यदि भूयादधिविन्ना या भवेत्स्वतो निकटे।
प्रीतिं तया विदध्यान्नेतरया पद्मपत्राक्षी ॥ १० ॥
अधिकं चिकीर्षति पतिर्या तां संयोज्य चान्यया कलहे।
स्वीयानुकम्पयाऽनु च गृह्णीयात्कान्ततोपाय ॥ ११ ॥
ताभिर्न्नतु बह्वीभिर्या स्यादेका चिकीर्षिता ह्यधिका।
दुर्जनतामिह गमयेत्स्वयमाविरता विवादे तु ॥ १२ ॥
कुर्वाणां पतिकलहं कृत्वाऽसौ पक्षपातमेना तु।
आश्वासयेत्सुचतुरा हृदयादुपबृंहितां कृत्वा ॥ १३ ॥
संवर्धयेच्च कलहं, कलहसंगतिः संदृश्यते मन्दा।
यदि संधुक्षणनिरता तत्रोपायानसौ रचयेत् ॥ १४ ॥
संतोषयेत्स्वयमिमामपि च पतिं स्वीयसौभगेच्छा चेत्।

इत्थं ज्येष्ठावृत्तं ज्येष्ठा वनिता समातनुयात् ॥ १५ ॥
ज्येष्ठायां तु कनिष्ठा वृत्तिं रचयेदसौ सदा मातुः ।
लब्धं स्वज्ञातिभ्यस्तामुख्यैवोपयुञ्जीत ॥ १६ ॥
कुर्वीत नात्मवृत्तं कान्ते ज्येष्ठानधिष्ठितं यत्तु ।
पतिमधिशयीत तस्याः प्राप्याज्ञां सदैवैतत् ॥ १७ ॥
अस्या वचनं कथयेन्नान्यस्यै बालकान् पुनस्तस्याः ।
स्वेभ्योऽधिकान् हि पश्येदिहोपचारः पतेरधिकः ॥ १८ ॥
पतिपुरतो नाख्यानं प्रतिपत्नीजातवेदनाभूम्नः ।
मानं लिप्सेद्गूढं पत्युर्वैशेषिकं सुभगा ॥ १९ ॥
पथ्यमनेन मदीयं जीवनमपि चेति निर्दिशेद्यत्नात् ।
नाचक्षीत वहिस्तद्वाला श्लाघानुरागाभ्याम् ॥ २० ॥
भिन्नरहस्या भर्तुर्लभतेऽवज्ञां मनोऽनुरूपाऽपि ।
गोनर्दीयो भीत्या गूढां मानार्थितामाह ॥ २१ ॥
अनुकम्पेत ज्येष्ठामनपत्यां दुर्भगामसौ बहुधा ।
अनुकम्पयेच्च पत्या वृत्तमिदं स्यात्कनिष्ठायाः ॥ २२ ॥
या त्विन्द्रियदौर्बल्याद्विधवा भोगेच्छया तु वा नारी ।
हित्वा वाऽपर्याप्तं भोगे पतिमन्यमाप्नोति ॥ २३ ॥
कथितेयं हि पुनर्भूः सा तु प्रागेव चानुसंचिन्त्य ।
गुणिनं भोगासक्तं चित्तानुगुणं शुभाऽऽप्नोति ॥ २४ ॥
अविचार्य ग्रहणे खलु भूयः स्यादन्यकांक्षया तरला ।
नाप्नोति सुखमपि सा, तस्मादुचितो विचारोऽस्याः ॥ २५ ॥
स्वीकुरुते वा कामं निष्क्रमणेच्छामसौ समासाद्य ।
स्यादन्यथा गुणस्य हि संयोगो दुःखहेतुः सः ॥ २६ ॥
आत्मानुसारतः सा नायकतः साधु कर्म लिप्सेत ।
आपानकोत्सवादि हि यच्च सहिष्णुत्वमायाति ॥ २७ ॥
विभूयाद्वालङ्कारं स्वीयं वा तस्य वाऽनवद्याङ्गी ।

---

१ 'गोनर्दीय कथयति भीत्या गूढापमानमाना स्यात्' ख. ।

वात्स्यायनानुमत्यार्जनियमः स्यात्प्रीतिदायेषु ॥ २८ ॥
निर्गच्छन्ती स्वयमियमर्पितमनुना समर्प्य चास्मै हि।
प्रीत्या लब्धाद्धिनं निखिलं यातीति सिद्धान्तः ॥ २९ ॥
याति गृहीत्वा सर्वं भर्त्रा निष्कास्यमाना तु।
प्रभविष्णुरिव च सदनं तस्यागमने समागच्छेत् ॥ ३० ॥
प्रेष्येव कुलसपत्नीपुरतो वृत्तिं सदा समातनुयात्।
सर्वत्र सपरिहासा परिजनवर्गेषु दाक्षिण्यम् ॥ ३१ ॥
मित्रेषु प्रतिपत्तिः कौशलमधिकं कलासु बोध्यं च।
कलहेषूपालम्भं रचयेदेषा स्वयं भर्तुः ॥ ३२ ॥
उपकुर्यान्मृदु रहसि प्रतिपत्नीनां प्रयत्नतो ह्येषा।
स्वामिनमिव तदपत्यं सेवेतासौ विना कपटम् ॥ ३३ ॥
मण्डनकादि च तेषां कुर्वीतासौ सपादरे निरता।
मित्रे परिजनवर्गे रचयेद्विश्रम्भणादीनि ॥ ३४ ॥
आपानकयात्रोद्यानविहारादिशीलता चास्याः।
इति वर्तेत पुनर्भूर्वृत्तं शास्त्रानुसारेण ॥ ३५ ॥
चारुकलासु तदीयान् धात्रीभूता[1]ऽनुपालयेत्पुत्रान्।
उपगृह्य तस्य मित्र तद्भक्तिं व्यञ्जयेत्तेन ॥ ३६ ॥
कार्येषु धर्मशालिषु भूयादेषा पुनः पुरश्चरणा।
तद्व्रतनिरता भूयादुपवासे तस्य सक्ता च ॥ ३७ ॥
परिजनवर्गे रचयेद्दाक्षिण्यं दक्षिणतामाचरितुम्।
नैवाधिक्यं मन्येतात्मनि सौन्दर्ययुक्ताऽपि ॥ ३८ ॥
नोपालभेत, शयने रागमत्यानयनाय सात्म्येन।
तस्य तु मुहुरत्यापनमुचितं स्याद्ग्रामभावस्य ॥ ३९ ॥
कलहं यया रचितवान् साऽस्मै स्यात्प्रापणीया तु।
वाञ्छितया घटयेत्तं प्रच्छन्नं मर्मगोधा स्यात् ॥ ४० ॥
तत्र प्रकाशयेदपि यत्नं विदधीत नायकप्रेम्णि।

---

१ 'धात्रीरूपा' ख।

इति वृत्तेन चरन्ती सौभाग्यं प्राप्नुयात्सुभगा ॥ ४१ ॥
बह्वीनां परिणेता विषमतया नावलोकयेज्जातु ।
नावज्ञां च विदध्याद्दोषानुविवादि सहवासानाम् ॥ ४२ ॥
एकस्यां या क्रीडा या च रतिर्वैकृतं तथा चाङ्गात् ।
विश्वासोपालम्भौ नैवान्यस्यै प्रकाश्या हि ॥ ४३ ॥
प्रसरं न वा प्रदद्यात्स्त्रीणां प्रतिनायिकाहेतोः ।
तां चोपालम्भमानां दोषैः संयोजयेदसौ निपुणः ॥ ४४ ॥
काञ्चिन्मानैर्विपुलैः विश्रम्भे रहसि वा परां वनिताम् ।
प्रत्यक्षपूजनैरपि कांचित्संरञ्जयेन्निपुणः ॥ ४५ ॥
गमनैरुद्यानादिषु भोगैर्दानैः सपूजनेङ्गितैः ।
प्रीत्या चैव रहस्यैः सर्वा अनुरञ्जयेद्युवतीः ॥ ४६ ॥
विजितक्रोधा रमणी तिष्ठन्ती शास्त्रदृष्टमार्गेण ।
अधितिष्ठति च सपत्नीर्भर्तारं वश्यता नयति ॥ ४७ ॥
अन्तःपुरस्य वृत्तिर्लभ्या तेष्वेव वर्गेषु ।
राज्ञो निवेदयेयुर्माल्यं कञ्चुकीप्रमुखाः ॥ ४८ ॥
आदाय तद्धि राजा निर्माल्यं प्रतिप्राभृतं दद्यात् ।
सालङ्काराः सायं सर्वाः पश्येत्स्वलंकृतास्तत्र ॥ ४९ ॥
तासु कथाः परिहासैः सरसाः परिशीलयेदसौ सरसः ।
योग्यत्वाद्यनुसारि च मानस्थानादिनिर्वर्त्यम् ॥ ५० ॥
पुनर्भुवस्ततोऽनु च तदनु च पण्याङ्गनास्तथाऽन्तरिकाः ।
आसां पश्चाद्भावः कीर्तित इह नाटकीयानाम् ॥ ५१ ॥
स्थानान्यासां पृथगिह विज्ञेयान्युक्तकक्षया तानि ।
योग्यतया च विधेया तासां मानानुवृत्तिश्च ॥ ५२ ॥
शयनोत्थितस्य दिवसे भर्तुः प्रहितं तु वासकेशान्या ।
अनुलेपनादिरुचितं तस्या आली निवेदयत्तस्मै ॥ ५३ ॥
कथयेत्तदनु वासकमेषा पुरतोऽस्य वासकशान्याः ।

---

१ 'नापि विवाद' ख. ।

हित्वा वासकयुक्तां नान्यां युञ्जीत भोगेन ॥ ५४ ॥
युगपत्सर्वाभिश्चेत्सहितं कुसुमादिवासकेशाभिः ।
यस्याः परिगृह्णीयाज्जानीयाद्वासकं तस्याः ॥ ५५ ॥
उत्सववेलायामिह सर्वाः सामान्यरूपतः पूज्याः ।
आपानकं च देयं धर्मोऽसौ भूरिभार्यस्य ॥ ५६ ॥
निष्कासोऽबहिरुचितः कासांचिद्भृत्यदर्शने स्त्रीणाम् ।
नहि कुलयुवतिर्योग्या संगीतादौ भवेत्कापि ॥ ५७ ॥
बाह्या नच प्रवेश्या अन्तःपुरके कदाऽप्यविज्ञाताः ।
धर्मेष्ववधृतशौचा संयोज्या योग्यता ज्ञात्वा ॥ ५८ ॥
बह्वीषु प्रतिपत्तेरान्तःपुरिकेषु न क्रमो मौलः ।
आर्हत इहोपयोगश्च न मत्स्याद्ये यतः प्रमितः ॥ ५९ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
भार्याधिकारिकेऽस्मिन् चरमोऽध्यायः कृतः साङ्गः ॥ ६० ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ चतुर्थे भार्याधिकारिके-
ऽधिकरणे द्वितीयोऽध्याय ।

समास चेद भार्याधिक नाभ चतुर्थमधिकरणम् ।

---

अथ पञ्चमे पारदारिकेऽधिकरणे प्रथमोऽध्यायः ।

व्याख्येये पतितत्वादनुचितमपि प्रारदारिकं लिखति ।
गोपाङ्गनासु निरतं पावनचरितं हरिं कलयन् ॥ १ ॥
पञ्चममथाधिकरणं मथितं किल पारदारिकं नाम्ना ।
वात्स्यायनस्य वीरो व्याख्यातुं यत्नमाधत्ते ॥ २ ॥
अध्यायाः षडिहोक्ताः शीलावस्थापनं भवेद्यूनोः ।
व्यावर्तनस्य हेतुः सिद्धाः पुरुषाश्च नारीषु ॥ ३ ॥

---

१ ‘ सर्वासामानुरूप्यत पूजा ’ ख. । २ ‘ आर्हत इत्युपयोगाद्विश्र-
म्भाद्योगत प्रमित ’ ख. ।

साध्या योषिदयत्नात्प्रथमाध्यायस्य संग्रहः कथितः ।
परिचयहेत्वभियोगाचर्ये ह्युक्ते द्वितीयेऽस्य ॥ ४ ॥
भावपरीक्षा दूतीकर्माणीशस्य कामितं रक्षा ।
एते क्रमिका अर्थाः शेषाध्यायेषु संप्रोक्ताः ॥ ५ ॥
संगृह्येत्यमिहार्थानधिकरणे पञ्चमे सुकृती ।
तस्य प्रथमाध्याये व्याख्यानं यत्नतस्तनुते ॥ ६ ॥
व्याख्यातकारणा ये विदुदधति परदारसंगमाकांक्षाम् ।
तैरादितः परीक्षा कार्याऽन्तेऽसंभवात्तस्याः ॥ ७ ॥
साध्यत्वासाध्यतयोरायतिगम्यत्वयोर्विमार्गे च ।
वृत्तेनाप्यपरीक्ष्य तु भूयाद्रचितो न सौख्याय ॥ ८ ॥
त्यक्ता मया मदीयैरेषा संगत्य वैरिभिः कामात् ।
रचयेन्ममोपघातमितिहेतोस्तत्समातनुयात् ॥ ९ ॥
इत्याद्याः परदारान् कामयितुः कारणे स्फुटं बोध्याः ।
दशधा कामावस्था निर्दिष्टा कामशास्त्रेषु ॥ १० ॥
चक्षुःप्रीतिः संगो मनसः संकल्पविच्छेदौ ।
तनुता विषयत्यागो लज्जानाशस्तथोन्मादः ॥ ११ ॥
मूर्च्छामरणे तासां लिङ्गान्युक्तानि कामशास्त्रेषु ।
तत्र युवत्या शीलं सत्यं साध्यत्वशौचानि ॥ १२ ॥
विरहं च साध्यतायाः वेगे मृदुता तथा च चण्डत्वम् ।
आकृतिवैधर्म्याभ्यां लक्ष्यान्याचक्षते केचित् ॥ १३ ॥
आकृतिलक्षणयोगौ व्यभिचरतः सत्यशीलशौचादौ ।
आकारेङ्गितयोरिह लिङ्गत्वं स्यात्प्रवृत्तेश्च ॥ १४ ॥
वात्स्यायनस्य मत्या दोषोऽयं पूर्वसंमतेऽभिहितः ।
श्रीवीरभद्रयूना दृष्टाखिलकामशास्त्रेण ॥ १५ ॥
परदाराणां ग्रहणे व्याख्यायन्ते न हेतवस्त्वत्र ।
मूलानुसारतस्ते व्याख्याताः पूर्वमेवेह ॥ १६ ॥
पुत्रस्तु गोणिकायाः प्राह निदानं प्रवृत्तिसंबन्धि ।

उज्ज्वलपुरुषनिरीक्षणमम्बुजमुख्यास्तया पुंसः ॥ १७ ॥
तादृशरमणीदृष्टौ कामः संजायते स्फुटस्तस्याम् ।
तस्मात्प्रवृत्तिहेतुर्नापेक्षेत्येतदासिद्धम् ॥ १८ ॥
नापेक्षन्ते धर्मं नार्यो नार्थमुल्लसत्कामाः ।
नापेक्षया परस्य च रचयन्त्यभियोगमेणाक्ष्यः ॥ १९ ॥
व्यावर्तते चिकीर्षाशालिन्यपि पुंसि साभियोगे तु ।
एषः स्वभावभेदः प्रायो वामोऽभिरामाणाम् ॥ २० ॥
अभियुक्ताऽपि न सिध्यति तादृग्बुद्धिः कदाचनेहैषा ।
निष्कारणमभियुंक्ते हरिणदृशं वल्लभः क्वापि ॥ २१ ॥
अभियुज्याप्यभियोगं क्वचन पुनर्वर्जयत्यसौ चतुरः ।
गच्छति मध्यस्थत्वं सिद्धायां क्वापि बालायाम् ॥ २२ ॥
अवमन्यते च सुलभां दुर्लभां समीहते बहुधा ।
इति शीलावस्थापनमुक्तं यूनोर्विविच्येह ॥ २३ ॥
अनुरागः पत्यावपेक्षाऽपत्यस्य निर्गमो वयसः ।
दुःखेन चाभिभवनं विरहाभावः प्रियेणाथ ॥ २४ ॥
उपमन्त्रिताऽस्म्यवज्ञापूर्वमिति क्रुद्धताऽऽयतेर्विरहः ।
गन्तेति कामविरतिः संकल्पेऽप्रतर्क्यत्वात् ॥ २५ ॥
ईर्ष्याऽन्यस्यां सत्त्या स्यादुद्वेगो ह्यसंवृताकारात् ।
मित्रे निसृष्टभावस्तस्मिन्नित्युद्गतोपेक्षा ॥ २६ ॥
तेजस्वीति च साध्वसमुक्ता शङ्काऽभियोगतः शुष्कात् ।
मृग्या भयं च मत्वा वेगं चण्डं तथा चैव ॥ २७ ॥
कुशलः कलासु वृत्त्या नगरे क्रीडेति पाततः सखिषु ।
यदि वा कथिताऽसूया काले देशेऽनभिज्ञत्वात् ॥ २८ ॥
स्थानं परिभवहेतुर्मत्त्वा कृतिः प्रचुरमानस्य ।
नाकारितेऽपि बोधोऽवज्ञानं स्यादतस्तस्मिन् ॥ २९ ॥
एष शशो वेगेऽस्य च मन्दीभावोऽस्मि हस्तिनी चाहम् ।
मत्तो माभूदपकृतिरित्यनुकम्पा तु जायते तस्मिन् ॥ ३० ॥

आत्मनि दोषनिरीक्षणजन्मनिर्वेद उच्यते सद्भिः ।
भयमसतीत्वख्यात्या स्वजनबहिष्कारतो भवति ॥ ३१ ॥
पलितत्वादादरतो हानिः पत्या प्रयुक्ततामेत्य ।
कुर्यादेष परीक्षां भवति विमर्शो ममेत्यस्याः ॥ ३२ ॥
धर्मापेक्षा चैषा निवर्तते निन्दितात्पुनर्मार्गात् ।
आदित एव विधेयो वेधैः संभाविते हेतौ ॥ ३३ ॥
रागस्य वर्धनादिह दूरीकुर्यादिहार्थतायुक्तान् ।
संदर्शनादुपायेऽशक्तिभवान्वारयेदेतान् ॥ ३४ ॥
आश्वासनाद्भययुतान् तत्परिभवसंभवान्पुनः प्रणतेः ।
अन्यानपि परिपन्थिभिरुत्सार्यानाहुराचार्याः ॥ ३५ ॥
वैचक्षण्यप्रभृतिः परिपन्थी वैकृतस्य निर्दिष्टः ।
बहुमानादिर्हेतुर्व्यावर्तनकारणे प्रोक्तः ॥ ३६ ॥
शीलावस्थापनतः पश्चादुक्तं हि कारणं विरतौ ।
श्रीवीरभद्रयूना नूनं वात्स्यायनादत्र ॥ ३७ ॥
स्मरशास्त्रस्याभिज्ञः ख्यापनकुशलस्तथा कथायाश्च ।
कर्ता प्रेक्षणकस्य च परिमितसंभाषणश्चैव ॥ ३८ ॥
संसृष्टो बाल्यावधि यौवनवृद्ध्या तथा रुचिरः ।
आगतविश्वासः किल लीलाकर्मादिभिश्चैव ॥ ३९ ॥
कर्ता प्रियस्य तद्वद्दूतः पूर्वं तथैव चान्यस्य ।
तस्मादपि मर्मज्ञः प्रोत्तमया प्रार्थितश्चैव ॥ ४० ॥
सख्या च्छन्नं सृष्टः सुभगख्यातः सहैव संवृद्धः ।
प्रतिवेश्यः स्यात्कामी तादृक्परिचारकश्चैव ॥ ४१ ॥
धात्रेयिकापरिहृढो नववरकः प्रेक्षणे तथा त्यागे ।
उद्यानेषु च निरतो वृष इति विदितश्च लोकेषु ॥ ४२ ॥
साहसिको विद्यायामतिशयितस्तथा गुणेषु रूपेषु ।

---

१ 'बोधः' ख. ।

भर्तुर्वैपाचरणे यस्य महार्हे विनिर्दिष्टे ॥ ४३ ॥
इति सिद्धाः पुरुषाः स्युः स्त्रीषु स्मरशास्त्रसंसिद्धाः ।
अथ कथ्यन्ते नार्यो यत्नमृते यास्तु सिद्धाः स्युः ॥ ४४ ॥
अभियोगमात्रसाध्या द्वारस्थितिशालिनी च या नित्यम् ।
प्रासादादवलोकनशीला या राजमार्गस्य ॥ ४५ ॥
गोष्ठीं या च वितनुते तरुणप्रतिवेशिमन्दिरे नियतम् ।
सततप्रेक्षणनिरता दृष्टा पार्श्वेक्षणा चैव ॥ ४६ ॥
निष्कारणमधिविन्ना भर्तृद्वेषिण्यनेन विद्विष्टा ।
परिहारप्रविहीना निरपत्या वा स्थिता नित्यम् ॥ ४७ ॥
ज्ञातिषु कुलेषु या च विपन्नापत्या च विश्रुता गोष्ठ्याम् ।
प्रीत्या मुक्ता भार्या कुशीलवानां तथा विधवा ॥ ४८ ॥
बाल्ये या च दरिद्रा बहुभोगा भूरिदेवरानुगता ।
बहुमाना न्यूनपतिः कौशलसारातिदर्पा च ॥ ४९ ॥
अविशेषज्ञतया खलु मौर्ख्येण च भर्तुरुद्विग्ना ।
भर्तुः कन्याकाले या च वृता नैव लब्धा च ॥ ५० ॥
अभियुक्ता च तदानीमविषमशीलाऽवबोधमेधातः ।
प्रतिपत्तेः सात्म्यादपि सततं या पक्षपातिनी चैव ॥ ५१ ॥
हृतमानाऽनपराधे तुल्याभिश्चाप्यधःकृतास्त्रीभिः ।
प्रोषितपतिका तद्वज्ज्ञेया सेर्ष्यस्य भार्या च ॥ ५२ ॥
भार्या [1]व्यैक्षक्लीवककापुरुषकदीर्घसूत्रकादीनाम् ।
इत्थमिमा निर्णीताः सुलभा नार्यो नरेशेन ॥ ५३ ॥
इच्छा स्वभावजाता क्रियया चैवोपबृंहिता सम्यक् ।
बुद्ध्या निहतोद्वेगा भजति स्थिरतां गता याता ॥ ५४ ॥
मत्वा स्वसिद्धिसिद्धिं लिङ्गान्युन्नीय योषितश्चैव ।
व्यावृत्तिहेतुहन्ता सिद्धिं प्राप्नोति नारीषु ॥ ५५ ॥

---

१ 'व्यङ्गक०' ख.।

श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
परवल्लभाधिकरणे प्रथमोऽध्यायः कृतः साङ्गः ॥ ५६ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ पञ्चमे पारदा-
रिकेऽधिकरणे प्रथमोऽध्याय ।

---

## अथ पञ्चमे पारदारिकेऽधिकरणे द्वितीयोऽध्यायः।

अथ सद्वयतामस्मिन्कुरुतेऽध्यायस्य तत्परस्यैषः ।
व्याख्यानाद्व्याख्यातो दाने माने च शौर्ये च ॥ १ ॥
स्वयमभियोगात्साध्या कन्या दूत्या तथा तु सा नेष्टा ।
तनुभावा परयोपिद्दूतीसाध्येति चाचार्याः ॥ २ ॥
शक्तौ स्वयमभियोगो युक्तः कन्यासु चान्यनारीषु ।
तद्विरहे त्वभियोगो दूतीं कृत्वैव निर्वाह्यः ॥ ३ ॥
अनियन्त्रितसंभाषा यासां चैवापि साहसः प्रथमम् ।
ताः स्युः स्वतो हि साध्या दूतीसाध्यास्ततो भिन्नाः ॥ ४ ॥
कुर्यात्परिचयमादौ स्वयमभियोगं तु साधु कुर्वाणः ।
दर्शनमस्या द्विविधं स्वाभाविकमन्यथा चैव ॥ ५ ॥
तत्राद्यं निजमन्दिरसन्निधिमासाद्य जायतेऽन्यत्तु ।
मित्रज्ञातिभिषग्वरमुखमन्दिरसन्निधाने स्यात् ॥ ६ ॥
यज्ञोत्सवयोर्व्यसने गमनाचारे तथा शुभारामे ।
साकारं च विदध्यात्प्रेक्षणमस्याः सदोद्युक्तः ॥ ७ ॥
संयमनं केशानामाच्छुरणं पाणिकमलनखराणाम् ।
अधरोष्ठयोर्विमर्दं प्रह्लादं भूषणानां च ॥ ८ ॥
तास्ताश्च सह वयस्यैरादेशिन्यस्तदीयचेष्टानाम् ।
कार्या अतिप्रियाः किल चारुकथाः सन्निधौ तस्याः ॥ ९ ॥
भूरिप्रकाशनं स्याच्छ्रवणायास्याः स्वकीयदानादेः ।
उत्सङ्गे सुहृदोऽपि च जृम्भणमिह साङ्गभङ्गं स्यात् ॥ १० ॥

एकभ्रूप्रक्षेपं वाक्यश्रवणं तथा चरेत्तस्याः।
बालेनान्यजनेन च तामुद्दिश्य द्विधार्थाश्च ॥ ११ ॥
अन्यापदेशयुक्ता कथयेत्सुकथाः कथाप्रथाभिज्ञः।
तस्याः स्वयमावेदनमुचितं चित्ताभिलापाणाम् ॥ १२ ॥
अन्यापदेशतोऽपि च तामेवोद्दिश्य भूतलोल्लिखनम्।
परिचुम्बनमालिङ्गनमुक्तं चैवेह बालानाम् ॥ १३ ॥
ताम्बूलस्य च दानं जिह्वाग्रेणास्य साधु निर्दिष्टम्।
हनुघट्टनं च कथितं तस्यैवात्मप्रदेशिन्या ॥ १४ ॥
एवं यथावकाशं कुर्यादन्या अपीदृशीश्चेष्टाः।
आलापं रचयेदिह तस्याः स्वजनेन सोद्योगः ॥ ॥ १५ ॥
अस्यै क्रीडनकानां दानं ग्रहणं तथैव तत्करतः।
योजनमपि च कथाया युक्तं सम्बन्धिना तेन ॥ १६ ॥
संभाषणक्षमेण च लोकेनास्या भवेत्सदा प्रीतिः।
कार्यानुबन्धनिष्ठो गमनागमने विदध्याच्च ॥ १७ ॥
अस्याः संश्रवदेशे स्थितिमानथ दृष्टियोग्यतारहिते।
कामागमसूत्राणां कथयाऽपहरेन्मनस्तस्याः॥ १८ ॥
प्रसृते परिचय इत्थं हस्ते तस्या निधाय निक्षेपम्।
प्रतिदिनमनुदिवसं वा गृह्णीयादेष तो देशात् ॥ १९ ॥
सौगन्धिकमथ पूगं निजदारैः सह विविक्तदेशेषु।
दद्यादस्यै नक्तं तद्वद्विश्रम्भगोष्ठी च ॥ २० ॥
येषु च सुवर्णकारप्रभृतिषु कर्मार्थिनी भवेदेषा।
तत्र स्ववशमपि भूयादेवं स्याद्दर्शनं नित्यम् ॥ २१ ॥
एवमुपायान्तरतो भूयान्नित्यं स दर्शने निरतः।
स्यादित्थं लोकेषु हि विदितान्याप्रवादिरेतस्याम् ॥ २२ ॥
अनुसन्धानं तस्मिन्कुर्यादन्यस्य कर्मणोऽप्येषः।
न ह्यनुरागं लभते निष्पायोऽप्यन्यदाराणाम् ॥ २३ ॥

कर्मणि वस्तुनि यस्मिन् स्यादेषा कौशले तथा सेच्छा ।
आत्मायत्तं कथयेत्तस्योत्पत्त्यागमाद्येषः ॥ २४ ॥
पूर्वाचरिते लोकैः द्रव्यगुणादेस्तया परीक्षायाम् ।
रचयेदेष विवादं तत्परिजनतस्तया चैव ॥ २५ ॥
तत्परिजनैर्विवादे सपणस्तस्यां चरेदसौ प्रश्नम् ।
तत्संमत्या त्वन्यं पृच्छेदनया विवादेन ॥ २६ ॥
इत्थं परिचयहेतव इह निर्दिष्टाः परस्य दारेषु ।
श्रीवीरभद्रकृतिना परिचितकामार्थतत्त्वेन ॥ २७ ॥
कन्यामिव सदुपायः कृतपरिचयदर्शितेङ्गिताकाराम् ।
अभियुञ्जीत स्फुटनरमासां भूरिप्रवृत्तत्वात् ॥ २८ ॥
निर्दयकामशराहतिदलितहृदामप्यधीरवृत्तानाम् ।
प्रायेण चाभियोगाः सूक्ष्माः कन्यास्वसंयोगात् ॥ २९ ॥
द्रव्याण्यस्या गोष्ठीगत्युपभोगव्यतिकरेषु चानीय ।
उपयुञ्जीत निदर्शितसुभगाकारादिरेषा चेत् ॥ ३० ॥
परिवर्तनं विदध्यात्कुसुमोत्तरवस्त्रकाङ्गुलीयादेः ।
स्वस्य सुगन्धं रचयेन्महार्हकं च प्रयत्नेन ॥ ३१ ॥
ताम्बूलस्य च यत्नात्कुर्यात्तत्पाणिपङ्कजाद्ग्रहणम् ।
गोष्ठीगमनोद्यमवान् कुसुमान्येतत्करादीनाम् ॥ ३२ ॥
गृह्णीयादभियाचनपुरःसरं रागकांक्षया तस्याः ।
दशनादिपदसचिह्नं साकारं भूरिगन्धादि ॥ ३३ ॥
दद्यात्स्वयमेतस्यै स्पृहणीयं चेत्स्वयं भवेद्दाता ।
कुर्यात्साध्वसभङ्गं भूर्यभियोगेन कालेषु ॥ ३४ ॥
क्रमशो विविक्तदेशे नयनपरिचुम्बनं परीरम्भः ।
ताम्बूलदानलाभे परिवर्तनमथ च पुष्पाणाम् ॥ ३५ ॥
स्पर्शश्च गुह्यदेशे इत्यभियोगाः परस्य दारेषु ।
मूलग्रन्थानुगमादपि च परिगीता विनिर्दिष्टाः ॥ ३६ ॥
अभियुक्ता यत्रैका तत्र निषिद्धः पराभियोगः स्यात् ।

या त्वनुभूतविशेषा प्रियकरणैः स्यादसौ वश्या ॥ ३७ ॥
भर्त्रान्यित्र च दृष्टः संचारो यत्र नायकस्य स्यात् ।
तत्र न कामपि रमणीमभियुञ्जीतैव सत्साध्याम् ॥ ३८ ॥
शङ्कितरक्षितभीताः सश्वश्रूकाश्च पद्मपत्राक्ष्यः ।
प्रत्ययमात्मनि रक्षन्नभियुञ्जीतेह नैवासौ ॥ ३९ ॥
श्रीवीरभद्रकृतिना रचितेऽसमबाणशासनानुसृते ।
परवल्लभाधिकरणे पूर्णोऽध्यायो द्वितीयोऽसौ ॥ ४० ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ पञ्चमे
पारदारिकेऽधिकरणे द्वितीयोऽध्याय ।

---

## अथ पञ्चमे पारदारिकेऽधिकरणे तृतीयोऽध्यायः ।

अधिकरणे पञ्चमके कुरुते व्याख्यां तृतीयकेऽध्याये ।
भूचक्रचक्रवर्ती वीरः श्रीवीभरद्रोऽसौ ॥ १ ॥
अभियुञ्जानः सुदृशो भावपरीक्षां प्रयत्नतः कुर्यात् ।
यद्यभियोगग्रहणं तत्र न दूतीप्रयोगः स्यात् ॥ २ ॥
अगृहीत्वा त्वभियोगं पुनरपि संसृज्यमानतायां हि ।
हरिणीं चपलदृगन्तां चपलहृदां ता विजानीयात् ॥ ३ ॥
सा क्रमसाध्या, या पुनरभियोगं नैव चानुगृह्णाति ।
सालङ्कारविशेषा तथैव दृश्यत्वमायाति ॥ ४ ॥
ता वल्लभ्यां विद्यादेशे रहिते पुनस्तथैवान्यैः ।
या पुनरभियोगाना ग्रहणे निपुणा न भोगेऽपि ॥ ५ ॥
शुष्कप्रतिग्रहे तां निरतामतिकृच्छ्रसाध्यकां विद्यात् ।
नहि चेतासि मृगाक्ष्यः स्थिरता नेतुं समर्थाः स्युः ॥ ६ ॥
परिहरति नाभियोग न च संसर्गं समातनुते ।
प्रत्यादेशे विरता हसति तथा गौरवस्यैषा ॥ ७ ॥

---

१ 'भर्त्राऽन्यत्र च दृष्ट सचारो नायिकायाश्च' ख. ।

अभिमानादात्मनि वा तस्मिन्वा साऽतिपरिचयात्कृच्छ्रात् ।
साध्यां मर्मविदैनां दूत्या परिसाधयेन्निपुणः ॥ ८ ॥
परुषप्रत्यादेशान्निरतोपेक्षासु पात्रतां भजते ।
पारुष्योत्तरपूर्वां मृदङ्गीं साधयेदेव ॥ ९ ॥
सहते करादिसङ्गं तच्चित्ता नावबुध्यते चान्यत् ।
सातत्येन क्षान्त्या योगाद्वा सा भवेत्साध्या ॥ १० ॥
सुप्तः करसरसीरुहमुपरि समीपे तथा प्रसुप्तायाः ।
कुर्यात्साऽपि विरचयेदत्रोपेक्षां प्रसुप्तेव ॥ ११ ॥
भूयोऽभियोगकामा प्रयतेदेषा निवारणे सुप्ता ।
एतेन व्याख्यातश्चरणे चरणस्य विन्यासः ॥ १२ ॥
प्रसृतेऽस्मिन्निह भूयः सुप्तपरिरम्भसोद्यमो भूयात् ।
तत्रासहनामुत्थितिभाजां दिवसेऽग्रिमे प्रकृतौ ॥ १३ ॥
स्थितिशालिनीं च विद्यादभियोगार्थां कृशोदरीं पुरुषः ।
दूतीसाध्यां विद्यादेनां संदर्शने हीनाम् ॥ १४ ॥
चिरसंदर्शनहीना प्रकृतौ पुनरप्यवस्थिता स्पष्टा ।
भवतीत्याहतचित्तां दृष्टाकारां वशे कुर्यात् ॥ १५ ॥
याऽनभियोगा रचयत्याकारकमात्मदर्शने दात्री ।
सालङ्कारैकान्ते वेपथुयुक्ता सगद्गदं वदति ॥ १६ ॥
स्विन्नकराद्यङ्गुलिका स्विन्नमुखी चैव जायतेऽत्यर्थम् ।
आत्मानं योजयति च शिरसः संपीडनायास्य ॥ १७ ॥
आतुरसंवाहनिका हस्तेनैकेन तत्प्रकुर्वाणा ।
अपरेण सङ्गकृत्यं कुर्यादाश्लेषणं चैव ॥ १८ ॥
विस्मितभावा यदि वा निद्रान्धा करसरोरुहाङ्कितः ।
तिष्ठति संस्पृश्यैनं हरिणकिशोरस्फुरन्नयनाम् ॥ १९ ॥
अलिकैकदेशमूर्वोरुपरि निपात्यावतिष्ठते चेह ।
संवाहने नियुक्ता नोत्तोयातीह वैमत्यम् ॥ २० ॥

१ ‘ प्रत्यादेशाद्वा ’ ख. ।

अविचलितं करमेकं तत्रैव न्यस्य सुस्थिरा भवति।
संदेशेनाङ्गेन च पीडितमतिकालतो हरति ॥ २१ ॥
यदि वाऽहनि द्वितीये संवाहनकर्म कर्तुमायाति।
नायककृताभियोगं पूर्वेऽहनि वारयित्वैव ॥ २२ ॥
संसर्गं नात्यन्तं कुरुते परिहरति वा नवाऽत्यन्तम्।
संदर्शयति विविक्ते भावं चाङ्गं तथा गूढम् ॥ २३ ॥
परिचारकोपभोग्या सा चेदाकारिता तथैव स्यात्।
मर्पज्ञया प्रसाध्या व्याहृत्तौ तर्कणीया च ॥ २४ ॥
इत्थं भावपरीक्षा भाविन्या भूमिवल्लभेनेह।
श्रीवीरभद्रकृतिना व्याख्याता ख्यातवीर्येण ॥ २५ ॥
परिचयमादौ कुर्यात्पश्चात्संभाषणं समारचयेत्।
परिभाषणसंमिश्रो मिथ आकारस्य बोधश्च ॥ २६ ॥
प्रत्युत्तरेण दृष्ट्वा तस्या आकारसग्रहं पुरुषः।
गतसाध्वसो विरचयेदभियोगं पद्मपत्राक्ष्याः ॥ २७ ॥
आकारेण मृगाक्षी या भावं स्वस्य दर्शयेत्पूर्वम्।
क्षिप्रं स्यादभियोज्या सा प्रथमे दर्शने पुंसा ॥ २८ ॥
आकारिता स्फुटोत्तरमतिमञ्जुलमाशु दर्शयेदबला।
तत्क्षणसिद्धा ज्ञेया रतिलालसमानसा साऽपि ॥ २९ ॥
एष विधिस्त्वतिसूक्ष्मो धीरास्वपि चाप्रगल्भयोपासु।
अन्यासु च स्फुटः स्यात्पूर्वन्यायः परीक्षिण्याम् ॥ ३० ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते।
परवल्लभाधिकरणे रचितोऽध्यायस्तृतीयोऽसौ ॥ ३१ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ पञ्चमे पारदारिकेऽकरणे तृतीयोऽध्याय।

---

१ 'परीक्षायाम्' ख.।

# अथ पञ्चमे पारदारिकेऽधिकरणे चतुर्थोऽध्यायः ।



परवल्लभाधिकरणेऽध्यायतुरीये निरूपणं कुरुते ।
चतुर्ल्दधिर्तारलीना यदरिमहीपालमीनाक्ष्यः ॥ १ ॥
दर्शितचेष्टाकारा या भूयाद्विरलदर्शना वनिता ।
तां साधयन्ति दूत्या तद्वदपूर्वां च शास्त्रज्ञाः ॥ २ ॥
शीलादनुप्रविष्टा तस्यामाख्यानकपटपाठेन ।
सुभगङ्करणैर्योगैर्लोकानां चैव वृत्तान्तैः ॥ ३ ॥
कविकथया परवनितासक्तकथाभिश्च तत्स्वरूपज्ञा ।
स्तुत्वा लीलाद्यस्या दाक्षिण्यं बोधयेदेवम् ॥ ४ ॥
सुभगे त्वं गुणयुक्ता कथमीदृशि निर्गुणे प्रिये निरता ।
दास्येऽप्येष न निपुणः कमलदलाक्ष्यास्तवेदानीम् ॥ ५ ॥
वेगे मन्दः शठता मूढत्वं वाऽकृतज्ञतेर्ष्यालुः ।
कार्पण्यं विमुखत्वं भोगे यानीह वाच्यानि ॥ ६ ॥
शुक्षानि सन्ति तस्मिन्विरतौ तस्याश्च हेतुभूतानि ।
कथयेदस्याः सविधे सातिशयानीह सा दूती ॥ ७ ॥
भवति च यस्माद्दोषात्सोद्वेगा सा च नायके स्वीये ।
कुर्यात्तस्य पुरस्कृतिमेषा दूती कृतिमत्वरी ॥ ८ ॥
शशता नैव च दोषो भवति मृगी चेन्मृगेक्षणा श्लक्ष्णा ।
वडवाहस्तिन्योरपि चौचित्यानौचित्यं ब्रूयात् ॥ ९ ॥
विश्वास्यामिह तस्यां मत्वा दूतीं तु निर्दिशेदस्याम् ।
प्रथमं साहसयुक्तामणुभावां चेति गोणिकापुत्रः ॥ १० ॥
कथयेन्नायकचरितं कामित्वं चानुलोमतां चैव ।
युवत्याऽर्जितसद्भावा कार्यशरीरं वदेदित्थम् ॥ ११ ॥
आकर्णाक्षि निशामय किमपि विचित्रं मनोभुवश्चरितम् ।

---

१ 'परिच्छन्नम्' ख.। २ 'विश्वास्यातिरहस्यं स्वीयं दूती विनिर्दिशेदस्याम्' ख.।

दृष्ट्वा त्वामतिधीरश्चित्तोन्मादं समातनुते ॥ १२ ॥
एतावतोऽपराधान्निहतः कामेन दुःसहव्यथया ।
त्वत्तोऽप्राप्य त्राणं जह्यात्प्राणानपि प्रायः ॥ १३ ॥
तत्रारौक्ष्ये मत्वा सिद्धां दिवसेऽग्रिमे पुनर्दूती ।
वक्त्रादिषु प्रसादं दृष्ट्वा भूयः कथां रचयेत् ॥ १४ ॥
कथयेदस्याः पुरतश्चरितानि च परपुरुषनारीणाम् ।
आदौ कृत्वाऽहल्यां मुनिवनितां विश्रुतां लोके ॥ १५ ॥
चातुःषष्टिकयोगे नैपुण्यं तस्य दर्शयेदस्यै ।
एवं रूपतामस्य च वश्यत्वं साधयन्त्यस्याः ॥ १६ ॥
सौभाग्यं कथयेदपि संभोगं छन्नमन्यया तस्य ।
सत्यमसत्यं यत्नाच्चाकारं लक्षयेच्चैव ॥ १७ ॥
सापि सहासं कथयेद्द्याचैवासनं तथा चानु ।
स्थानं शयनं भुक्तं चेष्टितरचितानि पृच्छेच्च ॥ १८ ॥
स्वं दर्शयति विविक्ते रचयत्याख्यानके नियोगं च ।
चिन्ताजृम्भाश्वासान्कुरुते प्रीत्या ददात्यर्थान् ॥ १९ ॥
इष्टोत्सवयोर्नित्यं स्मरति च त्वद्दर्शनं तथा तस्याः ।
जातां कथां च कांक्षति तत्कथितां स्वस्य चाकथने ॥ २० ॥
दूत्या मनोरथेषु च कथितेष्वेतस्य नायकस्यैषा ।
हसति न किंचित्कथयति संदर्शितशोभनाकारा ॥ २१ ॥
उपबृंहयेदनुगतैरेनामिह नायकस्य चैवैषा ।
गुणकथनैरुपबृंहणमुचितं चासंस्तुतौ भवति ॥ २२ ॥
आकारासंसर्गेऽसंस्तुततायां तयोभयोरनयोः ।
दूतीकर्मनिषेधं कथयत्यौद्दालकिः शास्त्रे ॥ २३ ॥
सत्याकारे सक्तेऽसंस्तुततायां तथोभयोरनयोः ।
दूतीकर्मविधानं संमतमिह बाभ्रवीयाणाम् ॥ २४ ॥
संस्तुततायां सत्यामसति तथाऽऽकारभूरिसंसर्गे ।
दूतीकर्मविधानं संकथयति गोणिकापुत्रः ॥ २५ ॥

वात्स्यायनस्तु कथयति युगलाभावेऽपि दूतिकाकर्म।
प्रत्ययतो मतमेतत्सम्यगसम्यक्परेषां हि॥ २६॥
तासामुपायनानि हि मनसोऽभिमतानि दर्शयेदेषा।
अनुलेपनताम्बूले वासोऽञ्जनमङ्गुलीयं च॥ २७॥
प्रहितेष्वेषु च तस्यै कुत्रचिदर्पान्वितो भवेल्लेखः।
चिह्नं नखरदशनयोश्चिह्नान्यन्यानि चैतस्य॥ २८॥
कुङ्कुमविरचितमञ्जलिमपि वाससि नायकः शुभं रचयेत्।
साभिप्रायाकृति किल पत्रच्छेद्यं चरेदस्यै॥ २९॥
आपीडं च विरचयेत्तत्र श्रवसश्च लेखसंयुक्तम्।
तेषु मनोरथकथनं तत्पुरतो नायकः कुरुते॥ ३०॥
संगमयेदथ दूती सिद्धां तां कालदेशयोः शुभयोः।
देवानामभिगमने यात्रोद्यानीयलीलायाम्॥ ३१॥
संतरणे सरितामथ परिणययज्ञोत्सवे तथा व्यसने।
अग्नौ चौर्ये जनपदचक्रारोहे तथा चैव॥ ३२॥
व्यापारे प्रेक्षायां व्यापारान्तरमपीत्यमादिष्टम्।
इति वाभ्रवीयरीत्या सुगमः कालस्य निर्णयो दूत्याः॥ ३३॥
भवनेषु सखीभूतैः सङ्गं सुखमाह गोणिकापुत्रः।
विदितनिष्क्रमप्रवेशं वात्स्यायन आह तद्गेहम्॥ ३४॥
अष्टविधेष्टा दूती प्रथमा कथितेह सा निसृष्टार्था।
उपलभ्यार्थमभीष्टं नायकयोः स्नेहया कर्त्री॥ ३५॥
संस्तुतयोः सा प्रायो दारनियोगे तथाविधयोः।
अनुरूपयोः कुतुकतो घटनं स्यादप्रयोगेऽपि॥ ३६॥
उपलभ्य चैकदेशं शेषं कुरुते मितार्था सा।
दृष्टान्योन्याकृत्योर्विरलेक्षणयोरियं भवति॥ ३७॥
विदिता तु पत्रहारी संदेशं या समर्पयेदुभयोः।
दृष्टस्वभावयोः सा भवति च संसृष्टयोर्यूनोः॥ ३८॥
देशस्य बोधनार्थं यदि वा कालस्य वाऽथ दौत्येन।

प्रहिता स्वयमभिगच्छेद्रमणं साऽस्तवोधेव ॥ ३७ ॥
स्वभोपभोगकथनं कुर्याद्गोत्रस्य भूरि च स्खलितम्।
निन्देदस्य च भार्या तद्व्यपदेशाद्ददेदीर्ष्याम् ॥ ४० ॥
नखदशनचिह्नदात्री भवते सङ्कल्पिता पुरा चाहम्।
इत्यभिधात्री पृच्छेत्तद्भार्यातः स्वसौन्दर्यम् ॥ ४१ ॥
निजदूती कथिता सा द्रष्टव्येयं विविक्तदेशेषु।
ग्राह्या च दौत्यदम्भात्तामभिसंधाय संदेशम् ॥ ४२ ॥
कथयन्ती या रमणं सिद्धं कुर्याद्भवेत्तथा साऽपि।
एषा हितां तदीयां हृदयाद्दूरीकरोत्येव ॥ ४३ ॥
अनया कथितो ज्ञेयो नायकताभागिहात्मदूतश्च।
निजदूतीवल्लोके दृश्यन्ते यत्स्वयं दूताः ॥ ४४ ॥
नायकभार्यां मुग्धां विश्वास्य प्रविश्य चायन्त्रणया।
पृच्छति नायकचेष्टां शिक्षादात्री च योगेषु ॥ ४५ ॥
साकारं भूषयति च कोपमथ ग्राहयेत्तथैवैनाम्।
निर्वर्तयति नखदशनपदानि स्वयमस्याः शरीरे तु ॥ ४६ ॥
आकारयति च रमणं द्वारेणैतेन मूढदूती सा।
भार्यादूती मूढा भार्या चेद्दूततां याति ॥ ४७ ॥
यत्र स्खलतः कश्चन बालादिः प्रेष्यते भवेत्तत्र।
सा स्यान्मूका दूती लेखादिः कर्णपत्रादौ ॥ ४८ ॥
भावप्रस्तुतार्थमन्यस्वजनाग्राह्यार्थकं तु या वाक्यम्।
औदास्ये श्रावयति स्याद्दूती सा तु वाचैव ॥ ४९ ॥
प्रत्युत्तरस्य याचनमनयोर्युक्तं तथैव भूयः स्यात्।
एष न्यायः कथितः शास्त्रज्ञैर्गूढदूत्या च ॥ ५० ॥
भेदः प्रयोक्तृभेदाद्भार्यादूत्यास्तु गूढदूत्या स्यात्।
इत्थं दूतीभेदा निर्णीता वीरभद्रेण ॥ ५१ ॥
विधवेक्षणिका दास्यो भिक्षुक्यः शिल्पकारिका चैव।

---

१ 'गुढदूती' क. ख.।

विश्वासं त्वरया सा विदधति कार्यं तु दूतीनाम् ॥ ५२ ॥
पतिविद्वेषं तस्यां जनयति निर्वर्णयेच्च रम्याणि ।
चित्रान् रतिसंयोगानतियत्नाद्दर्शयेच्चैव ॥ ५३ ॥
नायकप(ग)तमनुरागं पुनरपि रतिकौशलं तथा तस्य ।
अधिकस्त्रीभिः प्रार्थनमथवाऽवष्टम्भमाख्याति ॥ ५४ ॥
अर्थमसंकल्पितमपि कारणतश्चापि भूरि चोत्सृष्टम् ।
आवर्तयन्ति दूत्यो वचसामिह कौशलेनैव ॥ ५५ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
परवल्लभाधिकरणे रचितोऽध्यायश्चतुर्थोऽसौ ॥ ५६ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ पञ्चमे
पारदारिकेऽधिकरणे चतुर्थोऽध्याय. ।

---

## अथ पञ्चमे पारदारिकेऽधिकरणे पञ्चमोऽध्यायः ।



अथ पञ्चमे प्रपञ्चं कुरुते पञ्चेषुचरितकृतिचतुरः ।
चतुरुदधितीरसंचरदरितरुणीगीतशौर्यश्रीः ॥ १ ॥
परवल्लभानुरागो नोचित इह भूमिवल्लभप्रभृतेः ।
आचारादिह तेषामाचरणं सर्वलोकानाम् ॥ २ ॥
सूर्योदयादिवत्किल नैषां गुप्ता भवेदसौ चेष्टा ।
अनुकरणं च निरर्गलमेतस्याः सर्वलोके स्यात् ॥ ३ ॥
तस्माद्गर्हितमेतैस्त्यक्तव्यं भूमिवल्लभप्रमुखैः ।
राष्ट्रोपप्लवतः स्यादेषां दोषोऽधिकस्तस्मात् ॥ ४ ॥
यदि परदाररुचिः स्याद्भूपालोऽन्योऽथवा समस्तेन ।
नाचरति तत्प्रकाशं परभवनस्य प्रवेशं च ॥ ५ ॥
तत्र ग्रामाधिपतेर्यूनोऽप्यथ हलोत्थवृत्तिपुत्रस्य ।
ग्रामीणानां पत्न्यो वचनेनैवेह साध्याः स्युः ॥ ६ ॥
च(च)र्षण्यस्ताः कथितास्ताभिः सह योगमाचरेच्चैव ।

विष्टौ कोष्ठागारप्रवेशकाले, प्रवेशे च ॥ ७ ॥
द्रव्यस्य च निष्क्रमणे, प्रतिसंस्कारे च मन्दिरस्याथ।
क्षेत्रस्य कर्मणि तथा कार्पासादेरथादाने ॥ ८ ॥
सूत्रप्रतिग्रहेऽपि च वस्तूना चैव विक्रयक्रययोः।
विनिमयवेलास्वेपामन्येष्वेवंविधेष्वपि च ॥ ९ ॥
अध्यक्षस्य च योगो व्रजयोषाभिः सहाथ निर्दिष्टः।
प्रव्रजितादिभिरुक्तः सूत्राध्यक्षस्य संयोगः ॥ १० ॥
रात्रावटतः सुकरः कुलटायोषाभिरेष संबन्धः।
वनेजाक्षीभिर्वणिजा नागरिकाध्यक्षयोः प्रोक्तः ॥ ११ ॥
नगरस्थाना सुदृशा सुवसन्तादिष्विहेशभवनेषु।
क्रीडाऽन्तःपुरिकाभिः सह निर्दिष्टा प्रमोदाय ॥ १२ ॥
योषा नगरविभूषा आपानकमादरादिमाः कृत्वा।
गत्वाऽन्तःपुरिकाणा पृथगावासं यथासगम् ॥ १३ ॥
आसित्वा च कथाभिः पूजा लब्ध्वा तथा प्रपीताश्च।
निष्क्रमयुपप्रदोषं कुर्युः कुशलाः सरोजाक्ष्यः ॥ १४ ॥
संभाषेत प्रणिहितदासी राज्ञस्तु पूर्वसंसृष्टा।
तत्र प्रयोज्यनारीं रमणीयं दर्शयेदेनाम् ॥ १५ ॥
प्रागेव स्वे भवने स्थितिभाजा ता प्रतीयमाब्रूयात्।
क्रीडायामस्या तव राजगृहस्थानि रम्याणि ॥ १६ ॥
कार्याणि दृष्टिविषये तानि च कालेन योजयेदेवम्।
मणिभूमिका प्रवालैः कुट्टिमक बाह्यदेशस्थम् ॥ १७ ॥
वार्क्षी मृद्वीकामपि समुद्रगेहं च भित्तिसचारान्।
प्रतिभवनचित्रकर्म व्याघ्रादेः पञ्जराणीह ॥ १८ ॥

---

१ 'भक्तमात्रेण यानि पेषणकुट्टनरन्धनादीनि कार्याणि, तानि विष्टिकर्माणि' इति जयमङ्गला। २ 'तथा व्रजयोषिद्भिः सह गवाध्यक्षस्य' इति वात्स्यायनसूत्रम्। ३ 'क्रयविक्रये पण्याध्यक्षस्य' इति वात्स्यायनसूत्रम्।

यानि पुरस्थितलोकैरुक्तान्युत्कृष्टवस्तुजातानि ।
तान्यप्यस्याः कुर्याद्विषये दृष्टेः सरोजास्याः ॥ १९ ॥
ईशानुरागमस्यामेकान्ते भूरि वर्णयेन्निपुणा ।
आयतिमस्यै कथयेत्सह राज्ञा संप्रयोगेण ॥ २० ॥
प्रतिपन्ना योजयति च राज्ञे तामप्यमन्त्रनिश्रावम् ।
स्वयमीशोऽप्रतिपन्नामागत्येहोपचारेण ॥ २१ ॥
सान्त्वनया रञ्जयति हि सम्भूयानुरागमुत्सृजेदुचितम् ।
अन्तर्नित्यं प्रेष्याः पत्युर्दाराः प्रयोज्यायाः ॥ २२ ॥
तत्र प्रणिहितदासी राज्ञः सदृशं परं तु पूर्वेण ।
आन्तःपुरिका कुर्यात्सह वा प्रीतिं प्रयोज्याभिः ॥ २३ ॥
प्रसृतप्रीतिं छलतो नियोजयेद्दर्शने पुनर्यत्नात् ।
पूजितनिविष्टयुक्तां पानवर्ती राजदासीति ॥ २४ ॥
विख्याता विज्ञाने यस्मिन् तद्दर्शनार्थमादृता ।
अन्तःपुरस्थया किल दासी तुल्या तु पूर्वेण ॥ २५ ॥
प्राप्तानर्थकशाङ्क्षां ब्रूयादित्थं हि भिक्षुकी वाक्यम् ।
आन्तःपुरिका राजनि सिद्धैषा मद्वचःस्था च ॥ २६ ॥
करुणारसार्द्रहृदया त्वामनया योजयाम्यहं सदया ।
वारयति सा त्वदीशानर्थं मद्वाक्यतः स्नेहात् ॥ २७ ॥
प्रतिपन्नां द्वित्रिस्तां प्रवेशयेत्साभयं वचश्चास्यै ।
दद्यादभयश्रवणात्सोत्साहां प्रणिहितेत्यादि ॥ २८ ॥
वृत्तौ कृताभिलापा अभितप्ता ये तथा महामात्रैः ।
बलतोऽन्यैर्निगृहीता व्यवहारे दुर्बलाश्चैव ॥ २९ ॥
भोगेन स्वीयेन च निःसंतोषाः क्षितीश्वरे प्रेम ।
कांक्षन्ति ये वहिर्गतमनुजे व्यक्तिं तयेच्छन्ति ॥ ३० ॥
बाध्या ये च सजातिभिरेतानभिबाधितुं तयेच्छन्ति ।
ये सूचकास्तयाऽन्ये कार्यपरा व्यसनयुक्ताश्च ॥ ३१ ॥
अनयैव व्याख्याता भार्या एषां विशिष्य गणितानाम् ।

श्रीवात्स्यायनमुनिना तदनु श्रीवीरभद्रदेवेन ॥ ३२ ॥
अन्येन वा प्रसक्तां सह निगृहीतां प्रयोज्यवनितां तु ।
तेन वियोज्य निविष्टां कुर्यादन्तःपुरे राजा ॥ ३३ ॥
प्रणिधिबलेन तदीयं यदि वा परिदूष्य नायकं राजा ।
अपराधिनां कलत्रं निग्रहदम्भान्नयेदन्तः ॥ ३४ ॥
इति योगाः प्रच्छन्नाः राजकुमारेषु कामवामेषु ।
परमन्दिरे प्रवेशो युक्तो नैषामनिष्टत्वात् ॥ ३५ ॥
कोट्टाधिपमाभीरं परभवनगतं निदेशतो भर्तुः ।
रजको जघान तस्मात्परभवनं नोचितं राज्ञाम् ॥ ३६ ॥
अश्वाध्यक्षो हतवान्काशीशानं तथा जयत्सेनम्[1] ।
तस्मात्परगृहयानं दारार्थे नोचितं राज्ञाम् ॥ ३७ ॥
देशप्रवृत्तियोगात्परदारेषु प्रकाशतो भूयः ।
दृश्यन्ते क्वचिदेते नत्वेवं सर्वदेशेषु ॥ ३८ ॥
प्रत्ता जनपदकन्या दशमेऽहनि साऽप्युपायनं नीत्वा ।
अन्तःपुरं प्रविष्टा भुक्तोत्सृष्टाऽन्ध्रभूपेन ॥ ३९ ॥
रात्रौ च वत्सगुल्मे या च महामात्रकामिनी सुभगा ।
सा याति क्षितिवल्लभसेवायैतेषु देशेषु ॥ ४० ॥
सरसा जनपदयोषाः प्रीत्यपदेशेन चार्धमासादौ ।
वैदर्भान्तःपुरिका अन्तःपुरगाः प्रकुर्वन्ति ॥ ४१ ॥
दृश्याः स्वकीयभार्याः ददति परे प्रीतिदायमेवेह ।
अपरान्तकप्रदेशे भूरि महामात्रराजभ्यः ॥ ४२ ॥
नृपनारीभिः क्रीडां सह कर्तुं देशनगरकामिन्यः ।
सौराष्ट्रे नृपगेहं यान्त्यैकैकं तथा मिलिताः ॥ ४३ ॥
एवं परदारविधिर्देशे देशे प्रवर्तितो भूपैः ।
विलसतितरां प्रयोगो नहि राज्ञां वारकः कोऽपि ॥ ४४ ॥
श्रौते पथि प्रयातैर्भूपालैरेप निन्दितः पन्थाः ।

---

१ 'जुपत्सेनम्' ख. ।

जितषड्वर्गां भूमिं ये विजयन्ते वघेलाद्याः ॥ ४५ ॥
राज्ये वघेलभोज्ये परदारेभ्यः परं जना विमुखाः ।
बीजं तत्र नरपतेः परनारीभोगवैमुख्यम् ॥ ४६ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
परवल्लभाधिकरणे पञ्चम इह संचितोऽध्यायः ॥ ४७ ॥
इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ पञ्चमे पारदा-
रिकेऽधिकरणे पञ्चमोऽध्यायः ।

---

## अथ पञ्चमे पारदारिकेऽधिकरणे षष्ठोऽध्यायः ।

अथ पञ्चमस्य षष्ठं स्पष्टयितुं जायते स सोद्योगः ।
अष्टदिगन्तनिविष्टा यदरिवधूः कष्टमायत्ते ॥ १ ॥
अन्तःपुररक्षणतोऽनीक्षणमेवान्यपुंसि तत्स्थानाम् ।
एकोऽनेकसमानो भर्ता तृप्तिस्ततो नासाम् ॥ २ ॥
तस्मात्परस्परं ताः कुर्युस्तृप्त्यै प्रयोगसंयोगान् ।
धात्रेयिकां सखीं वा दासीं वा पुरुषवेषेण ॥ ३ ॥
कृत्वाऽऽकृतिसंयुक्तैः कन्दैर्मूलैरपद्रव्यैः ।
निर्वर्तयेयुरुचितं स्वाभिप्रायं विशाखाक्ष्यः ॥ ४ ॥
प्रतिमा वा पुरुषीयाः प्रस्फुटलिङ्गास्तथा पुरस्कार्याः ॥
राजानो वा कृपया विनाऽपि भावं ध्वजं कृत्वा ॥ ५ ॥
अभिगच्छन्ति च बह्वीरेकरजन्यां हि यावदर्थं ताः ।
स्नातायां प्रीत्या वा साभिप्रायोऽथ वासेन ॥ ६ ॥
अल्पभर्तृकसुरताः स्त्रीप्रतिमायां विपोनिलुल्येषु ।
अथ केवलोपमर्दात्स्वाभिप्रायं नियच्छन्ति ॥ ७ ॥
योषावेषान्पुरुषानन्तःपुरमध्यभूषणीभूताः ।
सह परिचारिकयाऽन्तःप्रवेशयन्तीह कामेन ॥ ८ ॥

---

१ 'साधितो' ख. । २ 'शिश्नाकृतिसंयुक्तैः' ख. ।

प्रयतेरन्नथ तेषामानयने साधु दर्शितायतिकाः।
अभ्यन्तरसंसृष्टाः धात्रीपरिचारिकामुख्याः ॥ ९ ॥
सुकरप्रवेशतामिह निःसारत्वं तथैव तद्भूमेः।
विस्तारं मन्दिरगं रक्षकवर्गप्रमादं च ॥ १० ॥
निर्वर्णयेयुरेताः परिजनवर्गेष्वनित्यतां चैव।
असताऽर्थेन न कुर्युः प्रवेशमेषामिमाः कथिताः ॥ ११ ॥
न प्रविशेदन्तःपुरमुत्कटदोषं सपातकं पुरुषः।
लोभादथवा कामादृष्टादृष्टौ यतो दोषौ ॥ १२ ॥
अन्याहूतौ हेतून्विचार्य यत्नादिहापि वक्तव्यान्।
विहितोपायस्ताभिः प्रविशेदपि पातकाभीतः ॥ १३ ॥
कक्ष्या दृष्ट्वा बहुशोऽसंकीर्णाः सापसारणा बहुधा।
रक्षककृतप्रमादा लभमानाक्रान्तप्रान्ता वा ॥ १४ ॥
प्रविशेदन्तःपुरमिह युक्त्या नैवात्र दर्शयेद्भीतिम्।
प्रमदावनात्वगूढं प्रोषितभूपालकं चैव ॥ १५ ॥
निष्क्रमप्रमारचयेदिह शक्त्या प्रतिवासरं ततो ह्येरः।
उक्त्वा हेत्वन्तरमथ संपृ(द)ष्टः स्याद्बहीं रक्षैः ॥ १६ ॥
आत्मानं कथयेदपि सक्तं परिचारिका बहिर्गमना।
भवति यदा विदितार्था तदलाभोऽनर्थं तथा दुःखम् ॥ १७ ॥
अन्तःप्रवेशिनीभिर्दूतीकल्पं समाचरेत्सर्वम्।
राजप्रणिधिविबाधे भूयादतिसावधानोऽसौ ॥ १८ ॥
यत्र गृहीताकारा द्रष्टुं योग्या प्रयोज्या स्यात्।
दूत्यास्तत्रावस्थितिरुचिता स्वीये तु संचारे ॥ १९ ॥
तस्मिन्नपि रक्षिषु तु प्रभवेत्परिचारिकापदेशो हि।
कुर्यात्तस्यां नियतानुबन्धाश्चक्षुषश्चैव ॥ २० ॥
कुर्वीतापि निवेदनमाकारस्यैष वेङ्गितस्याथ ॥
देशविशेषेऽवसरे संप्रेष्यं चित्रकर्मादि ॥ २१ ॥
दत्तं तया च पश्येत्प्रत्युत्तरमादिशेदसौ पश्चात्।

अस्या नियतोपगमे देशे छन्नः स्थितिं कुर्यात् ॥ २२ ॥
रक्षिपुरुषरूपो वा प्रविशेत्तत्प्रोक्तवेलयाऽप्येषः ।
वेष्टित आस्तरणादौ पुटभेदे वाऽऽगमे योग्यः ॥ २३ ॥
नष्टच्छायो यदि वा संरचयेन्निर्गमं तथावेशम् ।
सर्पाक्ष्यादिभिरेषश्छायाहर्ता भवेद्योगः ॥ २४ ॥
नकुलहृदयं तुम्बीफलचोरकमुरगाक्षिसंयुतं कृत्वा ।
पचति कृतान्तर्धूमं पिष्टं समभागतोयेन ॥ २५ ॥
अभ्यक्ताक्षिरनेन तु नष्टच्छायास्वरूपश्चरति ।
एतं परीक्ष्य योगं कुर्यात्स्यादन्यथाऽनिष्टम् ॥ २६ ॥
द्रव्याणां निर्हारे पानरसस्य प्रवेशकाले च ।
आपानकोत्सवार्थं चेटीनां संभ्रमे चैव ॥ २७ ॥
व्यत्यासे भवनानां व्यत्यासे चैव रक्षकस्यापि ।
यात्रायामुद्याने यात्रां कृत्वा प्रवेशे च ॥ २८ ॥
दीर्घं प्रोषितभूपे निष्क्रमणं वा प्रवेशनं यूनः ।
एतच्चैव विधेयं कौमुद्यादौ प्रयत्नेन ॥ २९ ॥
मर्म ज्ञात्वाऽन्योन्यं राजगृहस्था इहैककार्याश्चेत् ।
अन्यासामपि कुर्युर्भेदं स्वेष्टस्य संसिध्यै ॥ ३० ॥
बह्वीः स दूषयित्वा कार्यस्यैकस्य चार्पणे निरतः ।
सद्योऽभेद्यतया किल कामानुगुणं फलं याति ॥ ३१ ॥
देशे क्वापि च पुरुषाः संमत्या हन्त रक्षकाणां हि ।
प्रविशन्त्यन्तःपुरमिह रक्षा नैवापरान्तेषु ॥ ३२ ॥
आभीरकवनितानां क्षत्रियसंज्ञैरिहान्तरैर्योगः ।
नागरकान् प्रेष्याभिर्निवेशयन्तीह गुल्मानाम् ॥ ३३ ॥
वैदर्भिके सपत्नीपुत्रानुपभुञ्जते सुखं नार्यः ।
स्वैराजके यथेच्छं संबन्ध्याद्यै रहोनिरताः ॥ ३४ ॥
गौडीयानथ दारान् भृत्याद्या भुञ्जते गतोद्वेगाः ।
सैन्धवभूपतिनारीः कर्मकरास्तत्समानाश्च ॥ ३५ ॥

हैमवतान्तःपुरभुवि रक्षिणमुपगृह्य चार्थतः सहसा।
साहसिकाः प्रविशन्ति हि कापाशुगलक्ष्यतां प्राप्ताः॥ ३६॥
प्रच्छाद्य तरुणमेकं मिलिता वङ्गादिसंभवाः सुदृशः।
पुष्पप्रदाननिरतं नव दश वा भुञ्जते स्वैरम्॥ ३७॥
रक्षेद्दारान्स्वीयानेभ्यः परपुरुषयोगहेतुभ्यः।
कामोपधाविशुद्धानन्तःपुररक्षिणः कुर्यात्॥ ३८॥
इत्येके तेऽप्यन्यं भयलोभाभ्यां हि योजयन्त्याभिः।
तस्मादुपधात्रयशुचिरधिकारीति गोणिकापुत्रः॥ ३९॥
वात्सायनश्चतुर्थीं कथयति धर्मोपधासु संशुद्धिम्।
धार्मिकतयैव लब्धा शुद्धिः सर्वेति तत्त्वार्थः॥ ४०॥
दूत्या परीक्षणं केऽप्याहुर्निजचारुपङ्कजाक्षीणाम्।
दूतीयोगाद्दुष्टा भवत्यदुष्टास्ततो नैतत्॥ ४१॥
अतिगोष्ठ्यङ्कुशविगमौ व्यभिचाररतिस्तथा स्वकान्तस्य।
निर्यन्त्रणं च पुरुषैस्तद्वद्वासो विदेशेषु॥ ४२॥
वृत्तेरथोपघातः स्वीयायाः स्वैरिणीषु संसर्गः।
ताहि स्वभावयोजनमन्यत्राप्याचरन्त्येव॥ ४३॥
ईर्ष्यालुता च पत्युर्गमनोपस्थानमन्यदेशेषु।
स्त्रीणां विनाशकारणमुपदिष्टं कामशास्त्रेषु॥ ४४॥
परदारकथितयोगान्दृष्ट्वा शास्त्रेण शास्त्रतत्त्वज्ञः।
स्वस्त्रीषु सावधानः स्त्रीकृतदोषं न संयाति॥ ४५॥
पाक्षिकतया प्रसिद्धा दृष्टापायाः प्रयोगयोगा हि।
धर्मार्थयोर्विलोपाद्विरुचिः परदारके पुरुषः॥ ४६॥
तस्मात्स्वदाररक्षादक्षस्त्वार्थं प्रसिद्धमन्दाक्षैः।
शास्त्रमिदं पठनीयं न तु केवलमन्यनाशाय॥ ४७॥
मुनिनाऽऽरब्धमपीदं श्रेयस एवेह सर्वलोकानाम्।
न तु परयोषिति दोषानाधातुं प्रक्रमस्तस्याः॥ ४८॥

श्रीवीरभद्रकृतिना शास्त्रेऽस्मवाणशासनानुसृते ।
परवल्लभाधिकरणे षष्ठः स्पष्टः कृतोऽध्यायः ॥ ४९ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ पञ्चमे पारदारिकेऽधिकरणे षष्ठोऽध्यायः । समाप्तं चेदं पञ्चमं पारदारिकमधिकरणम् ।

---

## अथ षष्ठे वैशिकेऽधिकरणे प्रथमोऽध्यायः ।

अथ वैशिकं प्रविशदं कर्तुमसौ प्रक्रमं समातनुते ।
तद्गन्तृदोषघोषास्तज्ज्ञानादेव जायन्ते ॥ १ ॥
अथ वैशिकाधिकरणे वैशद्याय प्रवर्तते निरतः ।
प्रथमाध्यायव्याख्यामाख्यातुं कीर्तितो रिपुभिः ॥ २ ॥
अध्यायाः षडमुष्मिन्नधिकरणे तत्र चादिमेऽध्याये ।
गम्यविचारः पुरुषोपावर्तनहेतुसंविषयः ॥ ३ ॥
एतस्मादपरस्मिन्कथितं कान्तानुवृत्तमध्याये ।
अर्थागमे निदानं विरक्तलिङ्गानि चान्यस्मिन् ॥ ४ ॥
तत्र तथा प्रतिपत्तिर्निष्कासनप्रकाराश्च ।
शीर्णस्य प्रतिसंधिः स्यादध्याये तुरीये तु ॥ ५ ॥
तदुपरि लाभविशेषा अर्थानर्थानुबन्धमुख्योऽस्य ।
पण्यस्त्रीषु विशेषः स्पष्टौ षष्ठस्य निर्णीतौ ॥ ६ ॥
इत्थं षष्ठाधिकृतावध्यायार्थान्निरूप्य यत्नेन ।
श्रीवीरभद्रवीरो वैशिकवैशद्यमातनुते ॥ ७ ॥
योगं पुरुषैर्वेश्या रतिवृत्तिभ्यां प्रयोजनात्तनुते ।
स्वाभाविकोऽत्र रत्यै वृत्त्यै प्रोक्तस्ततो भिन्नः ॥ ८ ॥
स्वाभाविकवद्रमणो येन प्रत्येति कृत्रिमं तत्तु ।
यत्नादसौ प्रतनुयान्नार्थं लभतेऽन्यथाकर्त्री ॥ ९ ॥
तस्माद्रतेऽर्थहेतोरपि रागं दर्शयेदसौ वाढम् ।

तत्रालुब्धा तु स्याद्दृद्यै विश्वासयोगस्य ॥ १० ॥
आयतिसंरक्षार्थं नित्यमलङ्कारयोगिनी भूयात् ।
भूयान्नरेन्द्रमार्गमहितदृगन्ता च दृश्या च ॥ ११ ॥
न स्यादतीव विवृता पण्यसधर्मत्वमात्मने मत्वा ।
नायकमारचयेदथ कुर्यात्तद्वारणं परतः ॥ १२ ॥
आत्मानर्थनिवारणमात्मार्थानां च साधनं रचयेत् ।
परिभूयेत न गम्यैर्यैस्तान्कुर्यात्सहायान् हि ॥ १३ ॥
धर्माधिकरणनिष्ठो दैवज्ञो रक्षकश्च विक्रान्तः ।
समविद्यः सकलोऽप्यथ तद्वदमी पीठमर्दाद्याः ॥ १४ ॥
गान्धिकशौण्डिकरजका नापितभिक्षू स्रजां तथा कर्ता ।
इह चैते हि सहाया योगात्कार्यस्य ते ते च ॥ १५ ॥
केवलार्थास्तु गम्या वात्स्यायनभाषितैरिति प्रथितम् ।
वृत्तिपरोक्षा धनिनस्तरुणाश्च स्थानिनश्चैव ॥ १६ ॥
अक्लेशलब्धधनवान्सार्वदिकायस्तथा स्वतन्त्रश्च ।
संघर्षः शुभगमानी श्लाघनकः पुंप्रयोगार्थी ॥ १७ ॥
त्यागी स्वभावतोऽपि च राजनि सिद्धस्तथा महामात्रे ।
गुरुशासनातिवर्ती लिङ्गी प्रच्छन्नकामश्च ॥ १८ ॥
वित्तावमानशीलो दैवपरो ह्येकपुत्रवैद्यौ च ।
एवं शूरप्रमुखा एतासां वल्लभा प्रोक्ताः ॥ १९ ॥
अधिगम्या गुणवन्तः प्रीत्या यशसाऽधिकास्तथा पुरुषाः ।
विद्वान्महाकुलीनः समयज्ञः सत्कविश्चैव ॥ २० ॥
वाग्म्याख्यानकुशलस्तथा प्रगल्भोऽथ विविधशिल्पज्ञः ।
दृढभक्तिः सोत्साहो वृद्धासेवी तथाऽनसूयश्च ॥ २१ ॥
आधिव्याधिविहीनो बलवान्मित्रेषु वत्सलश्च नृपः ।
निरतो घटासु गोष्ठ्यामपि च समस्यादिलीलायाम् ॥ २२ ॥

---

१ 'तत्रानुद्धता' ख. ।

अरविन्दसुन्दरदृशां लालयिता स्यात्तथा प्रणेता च ।
मैत्रीपरः सुवशगोऽपरतन्त्रोऽनिष्ठुरश्चैव ॥ २३ ॥
ईर्ष्याविरतो निरतः कलासु चैते तथैव चान्येऽपि ।
नायकगुणा इहोक्ता इत्याद्याः कामशास्त्रेषु ॥ २४ ॥
नित्यमकंदर्पवृत्तिर्गोष्ठीकलयोस्तथा सदा निरतिः ।
अभ्यर्थनं विशेषे गुणनिरतिर्नैवमर्थेषु ॥ २५ ॥
प्रीत्यादिस्थितिशीला स्थिरमतिजातिश्च नायकापेक्षा ।
लक्षणरूपमधुरता इत्येते स्त्रीगुणाः प्रोक्ताः ॥ २६ ॥
बुद्ध्याचारौ शीलान्यार्जवं कृतज्ञताविसंवादौ ।
अपि दीर्घदूरदर्शी नागरको देशकालज्ञः ॥ २७ ॥
पूर्वाभिभाषिताऽपि च नैपुण्यं कामसूत्रविद्यायाम् ।
तद्वत्तदङ्गग्रन्थे साधारण्याद्गुणा एते ॥ २८ ॥
गुणविरहेण च दोषान् ब्रूमोऽप्यागम्यभावसंप्राप्तान् ।
चापललोभस्तम्भाः परिवादक्रोधभूरिहासाश्च ॥ २९ ॥
दैन्यं चैव पिशुनता वर्ज्याः स्युः सर्वभावेन ।
कृमिशकृत्काकवक्रः क्षयी रोगी प्रियकलत्रश्च ॥ ३० ॥
परुषोक्तिरथ कदर्यो निर्घृणगुरुजननिसृष्टचौराश्च ।
दम्भरतो दृढशङ्को बहुतरमन्दाक्षसंयुक्तः ॥ ३१ ॥
मानापमानापेक्षी द्वेष्यैरभिभूयते तथा यश्च ।
एतेऽगम्याः प्रोक्ता यः सक्तो मूलकृत्ये च ॥ ३२ ॥
रागो भयं तथाऽर्थः संहर्षो वैरिताप्रतीकारः ।
जिज्ञासा पक्षः किल खेदः संघर्ष इत्याद्याः ॥ ३३ ॥
प्रियसमता धन्यत्वं रागापनयः सजातिसादे(वे)श्ये ।
आयतिसातत्ये ह्यपि गमननिदानानि केषांचित् ॥ ३४ ॥
अर्थोऽनर्थापहतिः प्रीतिस्तद्धेतुरित्यपि प्राहुः ।

---

१ ' नित्यं कन्दर्पवृत्तिः ' ख. ।

नार्थः प्रीत्या वाच्यः प्राधान्यादेव चार्थस्य ॥ ३५ ॥
इत्थं गम्यविचारं कृत्वा श्रीवीरभद्रदेवेन ।
वात्स्यायनीयदृष्टा उक्ता इह हेतवो गमने ॥ ३६ ॥
यदि गौरवकामा स्यादथ लाघवनिवारणे सदोद्युक्ता ।
गमनपराऽपि तथान्तःप्रार्थितसंगाऽपि तेनेह ॥ ३७ ॥
सहसा न तेन रचयेत्प्रीतिं सा हेमनिकषसंकाशा ।
अवमानयन्ति पुरुषाः सुलभा नारीः प्रयत्नेन ॥ ३८ ॥
परिचारकप्रमुखतस्तदभावे पीठमर्दमुख्येभ्यः ।
शौचाशौचे विद्याद्रागारागादि चैतस्य ॥ ३९ ॥
अस्य प्रीतिं रचयेद्विटमुख्यैर्दासगायनाद्यैश्च ।
ते नृत्यादिव्याजात्तद्गेहं प्रापयेयुस्तम् ॥ ४० ॥
सा च प्रीत्या कुतुकैरत्यद्भुतभोग्यवस्तुदानैश्च ।
गोष्ठ्युपचाराभ्यामपि रञ्जनमेतस्य संतनुयात् ॥ ४१ ॥
अथ परिहासप्रायाः करकलितोपायनैस्तथा रुचिराः ।
परिचारका अभीक्ष्णं प्रेष्यास्तस्मिन् परावृत्ते ॥ ४२ ॥
सह वा गमनं कुर्याद्गेहे स्वयमस्य पीठमर्देन ।
व्याजेन कारणानां गम्योपावर्तने विधयः ॥ ४३ ॥
ताम्बूलानि च मालाः प्रीत्या गृहमागतस्य तस्येयम् ।
आहरति सानुलेपनमथ गोष्ठीर्योजयेत्कलया ॥ ४४ ॥
सप्रणयं वसुदानं कुर्यात्परिवर्तनं तथा भूयः ।
संयोगस्याकूतं स्वीयं परियोजयेदेषा ॥ ४५ ॥
अतिपेशलोपचारैर्दानैः प्रीत्या तथा कथायोगैः ।
संसृष्टा गम्येन तु तद्रञ्जनतत्परा भूयात् ॥ ४६ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
वैशिकनाम्न्यधिकरणे प्रथमोऽध्यायो विनिर्णीतः ॥ ४७ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ षष्ठे वैशिकाधिकरणे प्रथमोऽध्यायः ।

---

## अथ षष्ठे वैशिकाधिकरणे द्वितीयोऽध्यायः ।



अथ कुरुते कुतुकी ननु तदपरमध्यायमादरात्सार्थम् ।
प्रत्यर्थिपार्थिवानां यस्य भयात्सार्थवाञ्छाऽपि ॥ १ ॥
नायकयुक्ता रचयेद्रञ्जयितुं वृत्तमेकचारिण्याः ।
वहिरन्तर्न कदाचित्सक्ता भूयादियं तेन ॥ २ ॥
स्यान्मातर्यायत्ता क्रूरायामर्थलाभशीलायाम् ।
तदभावेऽन्यत्र स्यात्प्रातिप्रीतिस्तयोर्गम्ये ॥ ३ ॥
आनयति दुहितरं सा बलतस्तत्रापि नायिका तनुते ।
सततारतिनिर्वेदौ भीतिव्रीडे नचाऽनाज्ञाम् ॥ ४ ॥
व्याधिं कमप्यनिन्द्यं चक्षुरविषयं तथाऽस्थिरं चैव ।
प्रख्यापयेत्सति तथा हेतौ छन्नतोऽस्य नो योगः ॥ ५ ॥
प्रेषयति चेटिकामथ तन्निर्माल्यादिकारणादेषा ।
कुर्यादथ विस्मयमियमुपचारे तस्य संगेषु ॥ ६ ॥
स्यादस्य चाथ शिष्या सा तु चतुःषष्टियोगविद्यायाम् ।
एतत्कथितान् योगानाभीक्ष्ण्येन सेवेत ॥ ७ ॥
रहसि च वृत्तिं रचयेत्तत्सात्म्येनेह सा प्रयोगाणाम् ।
गुह्यादीनां गोपनमाख्यानं स्यान्मनोवृत्तेः ॥ ८ ॥
नोपेक्षेत च शयने कृतपरिवृत्तिं सृजेत्स्वतोऽभिमुखम् ।
गुह्यस्पर्शं कुर्यात्सुप्ते परिचुम्बनादि च ॥ ९ ॥
अन्यमनस्के दृष्टिः प्रासादे राजमार्गनिष्ठायाः ।
तत्र ज्ञाने नाशो व्रीडायाः साध्वसस्याथ ॥ १० ॥
तद्द्वेष्ये द्वेषस्तत्प्रियमैत्री रतिस्तदीये स्वे ।
तन्मनसः शोकादौ कुर्यात्स्वीये मनस्येवम् ॥ ११ ॥
जिज्ञासा परयोषिति कोपः स्वल्पो, नखादिचिह्ने स्वे ।
अन्यकृतस्याशङ्का रागस्यैवाप्रकाशश्च ॥ १२ ॥
स्वप्नायपदकाले स्यादनुरागस्य चारु निर्वचनम् ।

नायकगुणान् गृहीत्वा स्तुतिकाले वर्णयेत्सततम् ॥ १३ ॥
योजयति तस्मिन् वाक्यं रम्योत्तरतो यदा च भक्तोऽसौ ।
कुर्यात्कथानुवृत्तिं वृत्तं मुक्त्वा सपत्नीनाम् ॥ १४ ॥
निश्वासयति च पतने स्खलितेऽप्यथ जृम्भिते तथा पत्युः ।
कुर्यादनातिवाञ्छां जीवेत्याद्याः क्षुतादौ स्युः ॥ १५ ॥
व्याधेः स्यादपदेशो दौश्चित्ये स्याद्दौर्हृदेऽप्येवम् ।
गुणतः परामकथनं विवादतैस्तद्भवत्येव ॥ १६ ॥
दत्तस्तुल्यो दोषः स्मर्तव्यः सर्वथा तथा ह्यनया ।
स्वकृते दोषे भीतिस्तद्रचिते दर्शयेत्पीडाम् ॥ १७ ॥
भूषाणामग्रहणं राजभये व्याधिते तथा व्यसने ।
कान्तस्य संभसक्ते भोजनहानिर्विलापश्च ॥ १८ ॥
कांक्षति च देशमोक्षं निष्क्रयमपि भूपतेस्तथा रुचिरम् ।
अफलत्वं सफलत्वं स्वायुषि वैधुर्यलाभाभ्याम् ॥ १९ ॥
अर्थागमे तदीयेऽभिप्राये संभृते वपुःप्रचये ।
संभाषितोपहारं दद्यादियमिष्टदेवस्य ॥ २० ॥
कुर्यान्नित्यमलङ्कृतिमपितोऽभ्यवहार आदराद्दुर्यैः ।
गीतदशायां तस्य च संकीर्तिर्गोत्रयोः कार्या ॥ २१ ॥
ग्लान्यामुरसि ललाटे निजकरकमलं मृदु प्रकुर्वीत ।
निद्रालाभं रचयेत्तत्सुखमुपलभ्य निःशङ्कम् ॥ २२ ॥
तस्योत्सङ्गे शयनं कुर्यादुपवेशनं स्मितास्येयम् ।
तस्मात्पुत्राकाङ्क्षा गमने चैवाभियोगाय ॥ २३ ॥
नेच्छेदायुरिहाधिकमेतत्स्माद्रहसि नार्थमज्ञातम् ।
ब्रूयाद्व्रतमुपवासं निवर्तयेत्स्वस्य दोषेण ॥ २४ ॥
अनिवृत्तौ सह कुर्यात्स्वयमपि तेनैव सोपवासादि ।

---

१ 'योजयति तस्य वाक्ये रम्योत्तरतां प्रमोदयुक्ताऽसौ' ख. ।
२ 'निन्दातः' क. ।

शक्यमिदं न ममेति प्रथयेत्प्रसृते विवादे तु ॥ २५ ॥
वस्तु तदीयं पश्येदात्मीयादतिविशेषतो नित्यम् ।
तेन विना गोष्ठ्यादावगमनमप्याचरेन्नियता ॥ २६ ॥
निर्माल्यस्य च धारणमुच्छिष्टस्याशनं तथा श्लाघा ।
पूजां कुर्यादस्य च कुलशीलादेः प्रयत्नेन ॥ २७ ॥
गीतादिषु प्रयुक्तिस्तत्राभिज्ञो यदा भवेत्स पुनः ।
अभिगमनं विरचयेदनपेक्ष्यैवातपप्रभृति ॥ २८ ॥
जन्मान्तरेऽपि भूयादेष पतिर्मे मनोरथान् ब्रूयात् ।
इत्थं तदिष्टभावानपि लीलादीन् समातनुयात् ॥ २९ ॥
तस्याभिगमे कुर्यान्नित्यविवादं सहैव मात्राद्यैः ।
ते चेन्नयन्ति बलतो मरणोपायस्तदा चिन्त्यः ॥ ३० ॥
प्रत्यायनं प्रणिधिभिर्वृत्तेर्गर्हणं स्वयं स्वकीयाः ।
अर्थग्रहणे मात्रा नैव विवादस्तया कार्यः ॥ ३१ ॥
शपथप्रदानविधिना गमनेऽस्योपस्थिते सदा तिष्ठेत् ।
याने शुद्धिर्नियमो भूपात्ययगश्चरेत्तु मङ्गल्यम् ॥ ३२ ॥
स्मरणमतीतानां स्यादीक्षणिकायामुपश्रुतौ यानम् ।
आगमनेच्छां कुर्यान्नक्षत्रग्रहादेस्तदीयां हि ॥ ३३ ॥
स्वप्नेऽप्यस्तु तदीयः संगो मे कीर्तयेदिदं प्रकटम् ।
उद्वेगेऽनिष्टेऽपि च शान्तिककर्माचरेन्नियता ॥ ३४ ॥
प्रत्यागमे मनोभवपूजा देवोपहारदानानि ।
वायसपूजा च स्यादेतद्वैर्ज्यं नवे संगे ॥ ३५ ॥
अनुमरणं कथयेदिह सक्तस्य प्रीतिमार्गमाश्रित्य ।
समवृत्तिरर्थकारी निरपेक्षोऽर्थे निराशङ्कः ॥ ३६ ॥
एते सक्ताः कथिता अपि च निसृष्टार्थभाव उक्तो यः ।

---

१ 'आतपत्रादि' ख. । २ 'प्रथमसमागमानन्तरं चैतदेव वायसपूजावर्जं' (सू. ५२) ।

एतन्निदर्शनार्थं कथितं कथितं तु दत्तेन ॥ ३७ ॥
लोकादनुसरणीयोऽनुक्तो योगस्तथा वशीभावे।
पुरुपप्रकृतेरपि किल नापरथा द्रव्यलाभः स्यात् ॥ ३८ ॥
सूक्ष्मत्वादतिलोभादज्ञानात्प्रकृतितस्तथा चैव।
दुर्ज्ञानं नारीणां मनसि वशत्वं च जिज्ञासोः ॥ ३९ ॥
रज्यन्त्यो रमयन्त्यो रञ्जनकार्येस्तथा क्षमात्यागे।
सर्वार्थाकर्षेऽपि च दुर्ज्ञानास्तेन भाविन्यः ॥ ४० ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते।
वैशिकनाम्न्यधिकरणे प्रथमादपरः कृतः सार्थः ॥ ४१ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ षष्ठे वैशिकाधिकरणे द्वितीयोऽध्यायः।

---

## अथ षष्ठे वैशिकाधिकरणे तृतीयोऽध्यायः।



अस्य तु तृतीयमधुना सम्यगसौ कर्तुमुद्यमं कुरुते।
कुरुते यदरिवधूटी धाटीभीता न विश्रामम् ॥ १ ॥
वित्तादानं द्विविधं स्वाभाविकमथ च यौक्तिकं सक्तात्।
संकल्पितमिह चाद्यं सोपायं स्यात्ततः परतः ॥ २ ॥
लभमानाऽधिकमाद्यं नान्यस्मै स्यादुपायशीला सा।
इत्येके ह्याचार्यास्तदधिकतायै तदित्यन्ये ॥ ३ ॥
तंव्यवहारिपु काले शुद्धाया भूपणादिके तस्य।
अर्पणनयने कार्ये विश्रम्भार्थं प्रयत्नेन ॥ ४ ॥
तत्पुरतस्तद्वित्तस्तुतिनिरता स्यात्तथा च भूपादौ।
दत्त्वा मूल्यं प्रकृतं तद्द्रव्यस्यैव चादानम् ॥ ५ ॥
व्रतरक्षारामाणां देवकुलानां तथा तडागादेः।

---

१ 'युक्तोपायः' क.। २ 'अलङ्कारभक्ष्यभोज्यपेयमाल्यवस्त्रगन्धद्रव्यादि व्यवहारिपु कालिकमुद्धार्यमर्थप्रतिनयनेन तत्समक्षम्' (सू.९)।

उत्सवसंबन्धी स्याद्व्यपदेशः प्रीतिदायस्य ॥ ६ ॥
रक्षिभिरथवा चौरैर्मुष्टिर्वाच्या स्वकीयभूषादेः ।
तत्र निमित्तं कथयेदभिगमनं सा तमुद्दिश्य ॥ ७ ॥
कथनं प्रणिधिमुखेन च योऽभूद्गमनेन तत्र तस्येह ।
याचितभूषाप्रभृतेरज्ञातस्य व्ययस्याय ॥ ८ ॥
एवं विधान्तरेण च कथयेदर्थप्रणाशनं चतुरा ।
ऋणसंभवं विदध्यात्तस्य कृते पद्मपत्राक्षी ॥ ९ ॥
कुर्याद्व्यये विवादं तत्संबन्धे तदा जनन्याऽसौ ।
सुहृदां कार्येऽगमनं युक्ते कार्ये समुच्छित्तिः ॥ १० ॥
सति चाभिहारहेतौ ये तैः पूर्वं समाश्रिता गुरवः ।
अभिहार्याः स्वीकार्यास्ते पूर्वं सर्वभावेन ॥ ११ ॥
नायककृते च कार्यं शिल्पिषु वैद्ये तथा महामात्रे ।
कार्यार्थं स्यादुपकृतिरभ्युपपत्तिः सुहृत्प्रभृतेः ॥ १२ ॥
व्यसनोत्सवयोर्युक्ता कार्यं गेहेऽन्यदोहदोद्योगः ।
व्याधिः खेदविनाशो मित्राणामत्र निर्दिष्टः ॥ १३ ॥
विक्रयकर्म चरेदथ सा भूषादेस्तथैकदेशस्य ।
नायककृन्योदेशाद्वणिजो वा दर्शनं तस्य ॥ १४ ॥
ग्रहणं प्रतिगणिकानां व्यतिकरतः स्याद्विशिष्टभाण्डस्य ।
स्मरणं पूर्वोपकृतेरस्य नित्यं कीर्तनं तस्य ॥ १५ ॥
प्रतिगणिकानां लाभातिशयं संश्रावयेत्तया परतः
तासु च नायकनिकटे स्वापेक्षं लाभबाहुल्यम् ॥ १६ ॥
भूतमभूतं वा यत्तत्कथयेच्चारहासव्रीडा ।
मातुश्च प्रतिषेधः प्रकटस्वाङ्गिन्नसंधाने ॥ १७ ॥
तत्स्पर्धिनामतिशयस्त्यागे वाच्योऽतिसादराशयया ।
नैतत्पुनर्विलिप्स्यति कुर्यादिति बालकस्यैवम् ॥ १८ ॥
इत्यमुपायाः कथिता अर्थाधिगमे च वीरभद्रेन ।
वात्स्यायनानुसाराद्धिगतकामार्थतत्त्वेन ॥ १९ ॥

प्रकृतिविकाराद्वर्णादास्यगतादधिकदानतश्चैव ।
प्रतिलोमलोकसंगादन्यदुक्त्वाऽन्यथाकरणात् ॥ २० ॥
आच्छेदादुचितस्य च विस्मरणाद्वा तथा प्रतिज्ञाते ।
योजयति चान्यथा तत्संज्ञोक्तिः स्वीयपक्षेषु ॥ २१ ॥
अन्यत्र चैव शेते कार्याण्यपदिश्य मित्रवर्गस्य ।
कथयति परिजननिकटे पूर्वयुतायाः कथां चात्र ॥ २२ ॥
इत्थं निर्गतरागं ज्ञात्वा प्रागेव नायकं सुतनुः ।
कुर्यात्सारद्रव्यं स्वे हस्ते तस्य यत्नेन ॥ २३ ॥
तच्च गृहीतं द्रव्यं तदोत्तमर्णः प्रसह्य गृह्णीयात् ।
धर्मज्ञे व्यवहारं कुर्यात्सद्यो विवादेऽस्य ॥ २४ ॥
अल्पफलः किल सक्तो निश्चितपूर्वोपकारकारी यः ।
कार्यो विरक्तया ननु तस्यालीकैरुपालम्भः ॥ २५ ॥
निःसारप्रतिपत्तिकनिःसारणमाचरेत्कृतोपाया ।
तदनिष्टानि विरचयेदन्यात्रष्टम्भतो ह्येषा ॥ २६ ॥
निर्भोगः पैरितुष्टे भूम्यभिघातस्तथाऽङ्घ्रिकपलेन ।
अज्ञातविषयकथनं तदज्ञाने विस्मयः कुत्सा ॥ २७ ॥
दर्पस्य प्रतिघातः संरागः स्यात्तथाऽधिके तस्मात् ।
अनपेक्षणमप्युक्तं वाक्ये छलसंग्रहश्चैव ॥ २८ ॥
हासोऽनर्मणि नर्मण्यहासो व्यपदेशतः परार्थस्य ।
तस्मिन् वदति कटाक्षैरीक्षणमिह परिजने प्रोक्तम् ॥ २९ ॥
ताडनमपि च सहासं निन्दाभावः समानदोषाणाम् ।
उद्वेगो रतकृत्ये सुरताकृतिजघनगुप्ती च ॥ ३० ॥
नखदशनकर्मनिन्दा परिरम्भे स्यात्तथा पुनर्व्यत्रधिः ।
गात्राणां स्तब्धत्वं श्रान्ते कार्यार्थमुद्योगः ॥ ३१ ॥

---

१ 'ओष्ठनिर्भोग ' इति मूले पाठ । 'तं दृष्ट्वा स्वमोष्ठं क्रोडीकृत्य बहिर्निष्कासयेत् ' इति जयमङ्गला ।

ह्रासोऽशक्तौ शक्तौ स्तुतिविरहः स्यात्तथा प्रयत्नेन ।
सक्थ्नोश्च व्यत्यासो निद्रानिरतिस्तथा चैव ॥ ३२ ॥
उपलभ्यास्य च भावं रचयेद्गमनं महाजनोद्देशात् ।
अस्य कथां विनिहत्य च गमयेत्कथयाऽन्यया कालम् ॥ ३३ ॥
अपरिहार्ययोः कीर्तनमेतद्व्यसनव्यलीकयोस्तद्वत् ।
चेटिकया प्रथनानि च मर्मकथायास्तदीयायाः ॥ ३४ ॥
परिवर्जयेच्च दर्शनमस्मिन्नभ्यागते तथा गेहे ।
कुर्यादयाच्ययाचनमन्ते मोक्षं च यत्नेन ॥ ३५ ॥
कल्पः परिग्रहे खलु दत्तककथितोऽत्र सादरं ज्ञेयः ।
इत्यनुरागविरागौ कार्यौ शास्त्रानुसारेण ॥ ३६ ॥
गम्यः परीक्ष्य कार्यः कृत्वा बहुधाऽनुरञ्जनं रचयेत् ।
अर्थादानमतः किल वैशिकमन्ते तथा मोक्षः ॥ ३७ ॥
नार्त्यर्थं सह गम्यैः कल्पेनानेन संगता भवति ।
अर्थाहरणं कुरुते स्थित्वा वेश्या मनस्यस्य ॥ ३८ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
वैशिकनाम्न्यधिकरणे प्रथितोऽध्यायस्तृतीयोऽसौ ॥ ३९ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ षष्ठे वैशिकेऽधिकरणे तृतीयोऽध्यायः ।

---

## अथ षष्ठे वैशिकेऽधिकरणे चतुर्थोऽध्यायः ।



अथ यततेऽध्यायेऽसौ षष्ठचतुर्थेऽनिकृष्टषड्भावः ।
यस्यारातिवधूटी तक्षकदंष्ट्रमियेवास्ति ॥ १ ॥
निःस्वं कृत्वा प्रकृतं त्यक्तुं चेदिच्छतीह सा प्रगुणा ।
पूर्वं संगतिभाजा सन्धिं कुर्यात्प्रयत्नेन ॥ २ ॥
अवसितकार्यश्चेत्स्यादनुरागी वित्ततस्तथाऽभ्यधिकः ।
संधेयः स्यादस्याः स्यादेवं कार्यलाभोऽस्याः ॥ ३ ॥

स्वयमपसृत्य परत्र स्थितिमानथ निर्मितस्त्वकापसृतिः ।
एवं स्थलद्वयेऽपि स्वयमपसारी भवेदाद्यः ॥ ४ ॥
निष्कासितापसारी स्थलयुगले स्यात्तथा द्वितीयोऽसौ ।
स्वयमपसारी पूर्वं निष्कासितनिःसरोऽन्यतश्चान्यः ॥ ५ ॥
स्वयमपसृत्य परत्र स्थितिमानुक्तस्तथा चतुर्थोऽसौ ।
निःसारितापसारी युगलेऽन्यत्र स्थितोऽन्यः स्यात् ॥ ६ ॥
संतर्क्या एते स्युः कार्यवशाच्चेत्पुनः प्रविष्टाः स्युः ।
तत्राद्योऽसंधेयो गुणनिरपेक्षो द्वयोर्ज्ञेयः ॥ ७ ॥
स्थिरमतिशालिनि संधिं धनलाभाय द्वितीयके कुर्यात् ।
संमयान्यादरतो यो निःसरणादर्थदो भूयात् ॥ ८ ॥
निःसारतया त्यक्तो यदि वा स्याद्यः कदर्यभावेन ।
परया संधानेऽसो भवति न योग्यस्तथाऽऽद्यायाः ॥ ९ ॥
आदावधिमदं प्रतिसंधाय तृतीयके संधिः ।
स्वयमपसृत्य स्थितिमान् तर्कयितव्यश्चतुर्थः स्यात् ॥ १० ॥
तत्र विशेषादर्शी दृष्ट्वामप्येष तादृशो रागात् ।
बहु दास्यति बहुविधमिह तर्केष्वेष स्मृतः प्रथमः ॥ ११ ॥
दृष्ट्वा तस्या दोषान् गुणवाहुल्य विलोक्य मय्येषः ।
गुणदर्शी वसु दास्यति तर्केष्वेष द्वितीयः स्यात् ॥ १२ ॥
बालोऽनेकदृगयमिह रजनीरागोऽभिसंधिमुख्योऽसौ ।
यत्किंचित्कारी वा ज्ञात्वैवं साधु संधेयः ॥ १३ ॥
निःसारितः स्वयं यः परतो यः स्यात्स्वयं तथा निसृतः ।
तर्कयितव्यः सोऽपि हि तर्कास्तत्र प्रदर्श्यन्ते ॥ १४ ॥
अनुरागादागत्य हि बहु दास्यति मद्गुणैः स्फुटं ह्येषः ।

---

१ इतस्ततश्च निष्कासितापसृत स्थिरबुद्धि स चेदन्यतो बहुलभमानया निष्कासित स्यात्ससारोऽपि तया रोपितो ममामर्षाद्बहु दास्यतीति संधेय ' वात्स्यायनसूत्रम् ( सू० ११ ) । २ ' सन्ध्यसन्धिश्च ' क, ग. ।

भावितहृदयोऽन्यस्यां रमते न क्वापि कान्तायाम् ॥ १५ ॥
निष्कासितो मयाऽयं पूर्वमयोगेन लाञ्छयित्वा, माम् ।
निर्यातयितुं यतते सहसा वैरानुबन्धं च ॥ १६ ॥
अभियोगादाहृतमिह बहुधा विश्वास्य साध्वसौ नेतुम् ।
निर्वेष्टुं[1] वा यतते भेदे वा वर्तमानेन ॥ १७ ॥
एतेष्विह संधेयो यः स्यात्कल्याणकृत्स्वयं बुद्ध्या ।
कर्ताऽकल्याणस्य तु संधेयो नैव वामाभिः ॥ १८ ॥
आनेय एष यत्नाद्योऽन्यत्र स्यात्स्वयं तथा स्थितिमान् ।
निष्कासितो मयाऽसौ पूर्वमलीकार्यतां प्राप्तः ॥ १९ ॥
अन्यां प्राप्तो यत्नादानेयोऽसौ मयाऽधुनेत्येवम् ।
भेदं यास्यत्येष हि संभाषणमाप्य मत्तो हि ॥ २० ॥
अर्थविघातं यदि वा कुर्यामेतस्य वर्तमानस्य ।
अर्थागमकालोऽस्य हि जाता स्थानेऽस्य संवृद्धिः ॥ २१ ॥
लब्ध्वाचारैश्चायं दारवियुक्तस्तथा स्वतन्त्रश्च ।
अन्येन प्रतिबद्धः पित्रा भ्रात्रा वियुक्तो वा ॥ २२ ॥
संधिं कृत्वा ह्यमुना नायकमन्यं धनैर्युतं बहुभिः ।
अन्योपायैरवशं स्ववशे संप्रापयिष्यामि ॥ २३ ॥
मानस्तिर्यग्या मे तस्यामेनं विकारयिष्यामि ।
एतन्मित्रानुगतामनुना वा भेदयिष्यामि ॥ २४ ॥
यदि वा चलचित्तत्वाल्लाघवमेनं समानयिष्यामि ।
अभिसंधय इत्याद्या आनयने तस्य मन्तव्याः ॥ २५ ॥
दौःशील्यं तन्मातुः कथयेयुस्तस्य पीठमर्दाद्याः ।
निष्कासनस्य हेतुं पूर्वं वृत्तानुरागेऽपि ॥ २६ ॥

---

१ 'संमोक्तुं वा यतते भेदेनावर्तमानेन' ख. । २ 'ऽन्याधिकरणोऽयं' क. ।

विवशा निष्कामाऽपि च तत्कृत्यै वर्तमानसंसर्गम् ।
इति च वदेयुः खलु ते कुशलाः संधानमाधातुम् ॥ २७ ॥
तस्याः साभिज्ञानैरेनं प्रत्यापयेयुरनुरागैः ।
रचितोपकारयुक्तं चाभिज्ञानं भवेदत्र ॥ २८ ॥
इत्थं निर्णीता इह सुकरोपाया विशीर्णसंधाने ।
खड्गाभिघातशीर्णप्रतिभटदारोपगीतेन ॥ २९ ॥
पूर्वोऽपूर्वादधिकः श्रेयान्विज्ञातशीलरागत्वात् ।
भवति हि स सूपचारो यस्मादित्याहुराचार्याः ॥ ३० ॥
दुष्करसंधिः पूर्वो निर्धन इति नार्थदस्तथा तादृक् ।
अन्यादृशस्तु रक्तो भवति सुखेनेति केऽप्याहुः ॥ ३१ ॥
पुरुषप्रकृतिस्तन्त्रं रागारागौ प्रतीति केऽप्याहुः ।
तेषामुत्कर्षं प्रति पूर्वपरज्ञानमूलं स्यात् ॥ ३२ ॥
गम्यादन्या भेद्या अन्याश्यो वा भवेत्तथा गम्यः ।
अभिघातः स्थितिशालिनि संधानेनेति सिद्धान्तः ॥ ३३ ॥
संसर्गादन्यस्य हि भीतो नैवेक्षते व्यलीकानि ।
दूतान्तरानुपाते कुशलो यः स्यात्तथा पुरुषः ॥ ३४ ॥
संसृष्टा यदि तेन स्यादेषा चारु वारवामाक्षी ।
संसृष्टः पूर्वं किल कालैरिह वञ्चनीयः स्यात् ॥ ३५ ॥
अतिसक्तः पुरुषो यदि भयतो बहुदानशीलः स्यात् ।
स्तुतिरत्रासक्ते स्यात्सक्ते कार्यस्तथाऽभिभवः ॥ ३६ ॥
एवं मानाहानिः सक्तं नैव त्यजेत्तथा चैव ।
यदि सक्तस्तु वशी स्यात्तस्योक्त्या प्राप्नुयादन्यम् ॥ ३७ ॥
अर्थमुपादायास्मात्सक्तस्यैवानुरञ्जनं कुर्यात् ।
आयतिरष्टिरिहादौ तद्वत्प्रीतिं च लाभं च ॥ ३८ ॥
सौहार्दं च विरचयेत्संधानं सा विशीर्णपुंसो हि ।
इत्थं रचितो यत्नाद्विधिरिह शीर्णस्य संधाने ॥ ३९ ॥

---

१ ' तत्कृत्या ' ख. ।

श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
वैशिकनाम्न्यधिकरणे सार्थो रचितश्चतुर्थोऽसौ ॥ ४० ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ षष्ठे
वैशिकेऽधिकरणे चतुर्थोऽध्यायः ।

---

## अथ षष्ठे वैशिकेऽधिकरणे पञ्चमोऽध्यायः ।



षष्ठाधिकरणपञ्चममध्यायं साधु सार्थीकर्तुम् ।
वात्स्यायनानुसाराद्यतते श्रीवीरभद्रोऽसौ ॥ १ ॥
बाहुल्ये गम्यानां बहुधनलाभे तथा तेभ्यः ।
नैकस्मिन्नस्या रुचिरुचिताऽर्थे सद्रुचिश्चेत्स्यात् ॥ २ ॥
देशं कालं स्थितिमथ गुणगणमात्मन्यवेक्ष्य सौभाग्यम् ।
अन्याभ्योऽतिशयादि च रात्रौ संवर्धयेदर्थम् ॥ ३ ॥
गम्ये दूताः प्रेष्यास्तत्प्रतिबद्धास्तथा स्वयं प्रेष्याः ।
एकत्रापि च गच्छेल्लाभातिशये विहायान्यान् ॥ ४ ॥
कल्यान् परिग्रहोक्तान् कुर्यादथ यौगपद्ये तु ।
उभयोर्लाभे तुल्ये विनिगमकं वाञ्छितद्रव्यम् ॥ ५ ॥
इत्येके आचार्या, भवति हिरण्यं विशिष्टमन्येभ्यः ।
वात्स्यायन इति कथयति तन्मूलं सर्वमूलत्वात् ॥ ६ ॥
अप्रत्यादेयतया, यदि च भवेत्तत्र साजात्यम् ।
तत्र विशेषो ज्ञेयो व्यक्तिकृतः स्वर्णरूप्यादौ ॥ ७ ॥
यदि च न तत्र विशेषो जातिकृतो व्यक्तिसंभवो वापि ।
मित्रातिपातिगुणतस्तत्र विशेषोऽथवा प्रीतेः ॥ ८ ॥
भवति विशिष्टो रागी त्यागिन इति केचिदाहुराचार्याः ।

---

१ 'एकशायिनी भूयात्' ख. । 'द्रव्यसाम्ये मित्रवाक्यादतिपातित्वादायतितो गम्यगुणतः प्रीतितश्च विशेषः ।' इतिवात्स्यायनसूत्रम् ।

लुब्धो रागी त्यजति हि नतु दाता निर्ममो द्रैव्यम् ॥ ९ ॥
तस्मान्नैष विशेषो वात्स्यायनसंमतस्ततो ज्ञेयः।
अधनाद्धनिनि विशेषो मत इह सर्वस्य संमत्या ॥ १० ॥
त्यागिप्रयोजनकृतोः श्रेयानन्यो मते तु केषांचित्।
एकस्य करणतोऽसौ कृतकृत्यस्तावता भूयात् ॥ ११ ॥
त्यागी तु पूर्वदानं नैव विचारेषु निर्मेनोः स्मरति।
आयतिफलकृतः खलु तत्र विशेषो मुनेरस्य ॥ १२ ॥
त्यागी श्रेयान्कथितः कैश्चिद्बुधैः कृतज्ञतो लोके।
तत्र त्यागी दृष्ट्वा दोषं पूर्वश्रमादर्शी ॥ १३ ॥
स्मरति तु पूर्वविरचितं यः स्यात् कृतविज्ञतापरिख्यातः।
आयतितोऽत्र विशेषं तस्माद्वात्स्यायनः प्राह ॥ १४ ॥
अर्थागमस्तु मुख्यो मित्रोक्तेरत्र नैत्र केषांचित्।
अर्थागमस्तु सुलभो नतु मित्रं केचनैवैतत् ॥ १५ ॥
अतिपातिनो विशेषं तत्र च वात्स्यायनो मुनिः प्राह।
अनुनीय मित्रमत्र च तादृगिहार्थस्तु संग्राह्यः ॥ १६ ॥
अर्थागमो न मुख्योऽनर्थमतिघाततो मुनेर्दृष्ट्या।
अर्थः परिमितभावोऽताद्दगनर्थः सकृच्चापि ॥ १७ ॥
ज्ञेयस्तत्र विशेषो गुरुलाघवतस्तथा द्वयोरनयोः।
तत्संशयनिश्चययोस्तेन विशेषः परिच्छिन्नः ॥ १८ ॥
देवकुलारामादेः करणं दानं तथा परद्वारा।
तद्व्ययसहिष्णुपुरतो वस्त्रादानं च धर्माय ॥ १९ ॥
उत्तमगणिकानामिह लाभातिशयोऽप्यमादरात्कथितः।
रूपाजीवानामथ लाभातिशयं प्रवक्ष्यामः ॥ २० ॥
सर्वाङ्गालङ्कारः करणं रुचिरं तथा गृहप्रभृतेः।
भाण्डैर्बहुलद्रव्यैस्तद्वत्परिचारकैश्चैव ॥ २१ ॥

१ 'द्रव्ये' ख.। २ 'निर्मम' ख.।

उज्ज्वलपरिच्छदत्वं गेहेष्वथ वक्ति कुम्भदासीनाम् ।
नित्यं शुक्लं वासो योगः सौगन्धिकाद्येन ॥ २२ ॥
अन्नमपक्षुधमुक्तं स्वल्पस्वर्णोऽत्र भूषणोपचयः ।
इत्थं लाभातिशयो ज्ञातव्यः सर्ववेश्यानाम् ॥ २३ ॥
लाभा नैव तु नियता वैषम्याद्देशकालरागादेः ।
कासामपीह तासां वात्स्यायनभाषितेनैतत् ॥ २४ ॥
अन्यत्र वारणार्थं सक्तं चाप्यन्यतस्तथा हर्तुम् ।
हन्तुं लाभं तस्याः स्वस्यलब्धयादिकर्तुं वा ॥ २५ ॥
हन्तुमनर्थं स्वस्य च सक्तस्यान्यत्र चापि दोषार्थम् ।
उपकारास्मृतिशीला यदि वा वैरं समाश्रित्य ॥ २६ ॥
इत्यपमङ्गलबुद्धिर्धनमल्पं साधु सौरीकुर्यात् ।
धनं न गृह्णीयादपि तेनानर्थप्रतीघाते ॥ २७ ॥
त्यक्त्वैनमन्यनिरता स्यामहमेष वा व्रजेत्परतः ।
धननाशोऽस्य भवेद्वा पित्रादिर्वा समागच्छेत् ॥ २८ ॥
भविता स्थानभ्रंशश्चलचित्तस्यास्य चिन्तयित्वैवम् ।
गृह्णीयात्त्वरितं वसु वस्त्रादानैकनिष्ठा सा ॥ २९ ॥
संभावना धनस्य तु यस्य प्रभुदत्तलाभकृष्यादेः ।
तत्संग्रहं विदध्यादायतिशुद्धिं परीक्ष्येह ॥ ३० ॥
कृच्छ्राधिगतधना ये ये वा राजादिवश्यमर्यादाः ।
दूरादेव विसर्ज्यास्तत्सङ्गे क्षायतिस्तासाम् ॥ ३१ ॥
अर्थानर्थौ येषां गमनागमनप्रयुक्तमर्यादौ ।
बहुदानं स्वल्पेऽपि च संप्रेम्णा तान् धना गच्छेत् ॥ ३२ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽस्मिन्वागशासनानुसृते ।
वैशिकनाम्न्यधिकरणे सार्योऽभूत्पञ्चमोऽध्यायः ॥ ३३ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ षष्ठे
वैशिकेऽधिकरणे पञ्चमोऽध्यायः ।

---

## अथ षष्ठे वैशिकाधिकरणे षष्ठोऽध्यायः ।



षष्ठाधिकरणषष्ठं स्पष्टं कर्तुं समुद्यम कुरुते ।
श्रीवीरभद्रसुकृती कृतिषु गरिष्ठो विशिष्टासु ॥ १ ॥
अनुबध्नन्त्यप्यर्था आचरिताः क्वाप्यनर्थसंदर्भम् ।
निपुणैरनुसंधेया अनुबन्धाः संशयास्तेषाम् ॥ २ ॥
दौर्बल्यात्ते बुद्धेरतिरागात्तादृशात्तथा मानात् ।
अतिदम्भादतिहर्षादार्जवतस्ततश्च विश्वासात् ॥ ३ ॥
अतिरोषादतिशयितात्तथा प्रमादान्मदोद्भवाच्चैव ।
साहसतो दैवादपि भवति यदृच्छावशोऽनर्थः ॥ ४ ॥
तेषां फलं निशामय निष्फलता स्यात्कृतव्ययस्यापि ।
पीतनकेशच्छेदौ स्याद्वैकल्यं तथाऽङ्गस्य ॥ ५ ॥
आयतिभङ्गोऽर्थस्य च भवति निवृत्तिर्भविष्यतस्तद्वत् ।
प्राप्तस्य च निःसरणं पारुष्यं गम्यनाशश्च ॥ ६ ॥
आदित एव निवृत्तिः कर्तव्यैषामनर्थजातानाम् ।
एवं विविच्य बोधादुचितोपेक्षाऽर्थभूयिष्ठे ॥ ७ ॥
अर्थो धर्मः कामः कथितोऽसावर्थवर्गभेदस्तु ।
द्वेषाधर्मानर्थानाहुरनर्थस्य भेदास्तु ॥ ८ ॥
एकस्मिन्क्रियमाणे स्यादनुबन्धः परस्य सिद्धिस्तु ।
संदिग्धे फललाभे स्यादथवा नेति संदेहः ॥ ९ ॥
शुद्धः संकीर्णः खलु भूयादेषोऽथवैष जातः स्यात् ।
एकस्मिन्क्रियमाणे युग्मोत्पत्तौ द्विधायोगः ॥ १० ॥
उत्पत्तौ तु समन्ताच्छास्त्रे योगाः समन्ततः कथिताः ।
एषामुदाहृतिः खलु कार्या ग्रन्थक्रमेणैव ॥ ११ ॥
अर्थत्रिवर्ग उक्तस्तद्विपरीतो भवेदनर्थस्तु ।

---

१ 'ताडनकेशच्छेदौ' ख. । २ 'एवनिधावबोधात्' ख. ।

यस्य शुभस्य प्राप्तौ ग्रहणीयत्वं धनप्राप्तिः ॥ १२ ॥
अर्थनमन्येषां स्यात्तेषामपि चागमायती तद्वत् ।
कामागमानुसारात्कथितोऽर्थोऽर्थानुबन्धोऽसौ ॥ १३ ॥
यत्र च केवललाभः स्यादन्यस्याभिगमनतस्तत्र ।
अर्थो गतानुबन्धः सोऽयं कथितो विचारेण ॥ १४ ॥
अन्यार्थग्रहणे खलु लाभायत्योः परिक्षयो यत्र ।
आप्तस्याथ विनिःसृतिरभिगमनं लोकनिन्द्यादेः ॥ १५ ॥
आयतिभङ्गच्छेदेपोऽनर्थोऽनर्थानुबन्धकृत्कथितः ।
स्वेन व्ययेन गमने फलदेऽनर्थोऽर्थसंबद्धः ॥ १६ ॥
( श्रीवीरभद्रसूना वात्स्यायनमतेनैव । )
स्वेन व्ययेन गमनेऽफलदेऽनर्थोऽर्थसंगसंहीनः ।
स्वेन व्ययेन गमनेऽफलदेऽनर्थोऽनर्थेन संबद्धः ॥ १७ ॥
एवमिहार्थे योगो ज्ञेयः कामेन चैव धर्मेण ।
कामस्य कामयोगः धर्मस्यापीत्यमाक्षेपः ॥ १८ ॥
परितोषितोऽपि दद्याद्यदि वा नेत्यर्थसंशयः कथितः ।
अर्थं परित्यजन्त्या धर्मोऽसौ धर्मसंदेहः ॥ १९ ॥
अर्थमभीष्टं दृष्ट्वा क्षुद्रे कामस्य कामसंदेहः ।
क्षुद्रोऽनर्थं कुर्याद्यदि वा नेत्यत्र संदेहः ॥ २० ॥
त्यक्तोऽस्मो पञ्चत्वं यायात्तेनात्र पातकोत्पत्तिः ।
भूयादथवा नेति हि संदेहः स्यादधर्मस्य ॥ २१ ॥
रागाविवक्षयाऽर्थं दृष्ट्वा द्वेष्योऽनुसंशयो द्वेषे ।
इति कथिताः संदेहाः शुद्धाः कामानुसारेण ॥ २२ ॥
अथ संकीर्णविशेषान् संदेहेऽत्र प्रकाशितान् ब्रूमः ।
अर्थोऽनर्थो वा स्यादित्यादिः संशयस्तादृक् ॥ २३ ॥
अर्थः पराभिगमने संहर्षः शक्यते तथा सक्तात् ।
यत्रासौ कथितोऽर्थो विश्रम्भयत्र निश्चित्य ॥ २४ ॥

१ अयमर्धश्लोकः ख.। पुस्तके एवोपलभ्यते। २ 'द्वेषस्तु संशयो द्वेषे' ख.।

स्वेन व्ययेन गमनं परतः सक्ताच्च वित्तनाशः स्यात् ।
एष उभयतोऽनर्थः कथितः शास्त्रानुसारेण ॥ २५ ॥
परतः सक्ताचैवं यदि भूयादर्थलाभसंदेहः ।
एष उभयतः कथितः संदेहोऽर्थे विचारेण ॥ २६ ॥
व्ययवति पराभिगमने जातविरोधस्तथा पुमान्पूर्वः ।
क्रोधात्स्यादपकारी नवेति संदेह एकस्तु ॥ २७ ॥
सक्तोऽपि स्वमत्तं मत्यादास्यति नवेति चान्यः स्यात् ।
एषोऽनर्थ उभयतः संदेहः शास्त्रदृष्टया स्यात् ॥ २८ ॥
औद्दालकेरुभयतोयोगा एवं पुरो विनिर्णीताः ।
अथ बाभ्रवीयदृष्ट्या योगानुभयत्र वक्ष्यामः ॥ २९ ॥
अभिगमने परतोऽर्थः सक्तादर्थस्तु संगमानुदये ।
अर्थ उभयतः कथितः प्रथितोऽसौ कामशास्त्रेषु ॥ ३० ॥
अभिगमने व्ययभूमाऽनभिगमनेऽनर्थसंक्रमश्च महान् ।
एष उभयतोऽनर्थः कथितः प्रथितश्च तत्रैव ॥ ३१ ॥
अभिगमनानभिगमने यत्र स्वीकृत्य पूर्वतः परतः ।
स्यादर्थे संदेहः स्यादुभयत्रार्थसंदेहः ॥ ३२ ॥
मत्यादास्यति पूर्वः परगमने वा तथा न वेत्येवम् ।
परतो गमनेनार्थे संदेहस्तादृशोऽनर्थे ॥ ३३ ॥
प्रचुरानर्थः[1] परतः परतः स्यादर्थसंशयप्रभवः ।
अर्थः परतोऽनर्थः संदिग्धः स्यात्तथा परतः ॥ ३४ ॥
परतोऽनर्थः प्रचुरः परतोऽर्थस्येत्यर्थसंशयः प्रचुरः ।
परतोऽर्थः प्रचुरः स्यात्परतोऽर्थस्यार्थसंदेहः ॥ ३५ ॥
संदेहः क्वचिदर्थे क्वापि तथाऽनर्थसंशयो भवति ।
इत्येवं कथिताः षट् योगाः सांकर्यतो मुनिना ॥ ३६ ॥
रीत्याऽनयैव कामे तद्वद्धर्मे च चारु जानीयात् ।
योगानुभयत्रासौ[2] परिशीलितकामशास्त्रार्थः ॥ ३७ ॥

---

१ 'प्रचुरोह्यर्थः' ग.। २ 'योगानुभयप्रासौ' ख.।

एतेषु यत्र भूयानर्थोऽनर्थस्य वाधिका हानिः ।
तत्र विमृश्य सहायैः कुर्यादेषां प्रयोगं हि ॥ ३८ ॥
संभूय च यामेकां गच्छन्त्येष परिग्रहो गोष्ठयाः ।
सा चैषां सानन्दं कुर्यादर्थं कचित्संगे ॥ ३९ ॥
सुत्रसन्त्यादिषु पूर्णं योऽस्मं कुर्यान्मनोरथं मेऽद्य ।
तं यास्यतीयमुक्ति मात्रादेः कारयेदेनाम् ॥ ४० ॥
संहर्षमथ च जातिं गमनं कार्याणि लक्षयेच्चेषाम् ।
या संमतिवस्तेषां भजति हि गोष्ठीवशीभावम् ॥ ४१ ॥
एकत्रार्थमनर्थं सर्वत्र स्याद्यान्यथाभावः ।
अथवाऽनर्थः परितो द्वयतोऽर्थः स्याद्यार्थेन ॥ ४२ ॥
एवं योज्या अर्थेऽनर्थसंशये यथापूर्वम् ।
एवं संकीर्णत्वं धर्मे कामे च सर्वतो योगः ॥ ४३ ॥
वात्स्यायनस्य चरितं परिशील्यता प्रयत्नजातेन ।
श्रीवीरभद्रकृतिना कथिता अर्थानुबन्धा ये ॥ ४४ ॥
परिचारिका च कुल्टा स्वैरिण्यथ कुम्भदासिका च नटी ।
रूपाजीवा गणिका शिल्पकृदाया स्त्रियो वेश्याः ॥ ४५ ॥
सर्वासां तु सहाया गम्याश्च स्युर्निजानुरूप्येण ।
अनुरञ्जनादिरुक्तो यथानर्थानुबन्धानः ॥ ४६ ॥
रत्यर्थास्तु पुमांसो येन च नार्यस्तथा च रत्यर्थाः ।
शास्त्रार्थनाशान्याद्योपियोगस्ततः कथितः ॥ ४७ ॥
नार्यो रागरता अपि तद्वद्विहार्ये रताश्च लोकेऽस्मिन् ।
रागः पूर्वं कथितो वेश्यायोगस्तु तन्नरतः ॥ ४८ ॥

## अथ सप्तमे औपनिषदिकाधिकरणे प्रथमोऽध्यायः।



औपनिषदिकं सप्तमधिकरणं कामशास्त्रसर्वस्वम्।
व्याख्याति विश्वविदितो विमलयशा वीरभद्राख्यः ॥ १ ॥
अत्राध्यायद्वितयं सुभगंकरणं तथा वशीकरणम्।
योगा वृष्याः कथिताः प्रथमेऽध्याये तदीये तु ॥ २ ॥
क्षतरागस्यानयनं वृद्धौ विधयो विचित्रयोगाश्च।
औपनिषदद्वितीये अर्था वात्स्यायनेनोक्ताः ॥ ३ ॥
अध्यायार्थविभागं कृत्वेत्थं वीरभद्रभूपालः।
औपनिषदिकमथमं मथितार्थं यत्नतः कुरुते ॥ ४ ॥
व्याख्यातसमरसूत्रो विधिभिरर्थोक्तस्तथाऽप्यभिप्रेतान्।
अप्राप्नुवन्निहार्थानौपनिषदिके यतो भूयात् ॥ ५ ॥
त्यागगुणौ वयसा सह रूपं सुभगंकरं स्मृतं शास्त्रे।
एतत्सहजं प्रोक्तं प्रत्येकं कामशास्त्रेषु ॥ ६ ॥
तालीसकुष्ठतगरैः सुभगंकरणं हि लेपनं भवति।
एतैरेव सुपिष्टैर्वर्तिं कृत्वाऽक्षतैलेन ॥ ७ ॥
साधितमञ्जनमुक्तं सुभगंकरणं द्वितीयमत्रैव।
उत्पलपत्रकुरण्टैः सारिवया चाथ शोथघ्न्या ॥ ८ ॥
सहदेव्या च सुसिद्धं तैलं तादृग्विधैः स्मृतोऽभ्यङ्गः।
मालाश्च तेन युक्ताः सुभगत्वं प्रापयन्त्याशु ॥ ९ ॥
पद्मोत्पलमथ शोषितमिह युक्तं नागकेसरैः शुष्कैः।
चूर्णं मधुघृतयोगादवलीढं तादृशं भवति ॥ १० ॥
तानि च तगरतमालैस्तालीसैश्चैव चाप्युक्तानि।
अनुलिप्य हेमघटितकमक्षितरक्षोमयूरस्य ॥ ११ ॥
दक्षिणहस्ते धृतमिह सुभगंकरणं परं मतं लोके।
विद्यातन्त्राद्विद्यायोगादिह यौवने रुचिराम् ॥ १२ ॥

---

१ 'तादृग्विध मुनि. प्राह'।

मासं संवत्सरमथ परतः संधारयेदिमामुचितम् ।
मत्वा बालामथ तां लालसभूतेषु गम्येषु ॥ १३ ॥
योऽस्याः संहर्षादिह बहु वसु दद्यात्तदीयतां तस्याः ।
कुर्यादितीह कथितः सौभाग्ये वर्धनोपायः ॥ १४ ॥
गणिका यौवनदर्पाद्दुहितुः शीलादि चारु संवीक्ष्य ।
एतद्धनेन देया कथयित्वा स्थापयेदेवम् ॥ १५ ॥
सा खलु मातुरविदिता नागरिकाणां सुतैर्महाधनिभिः ।
प्रीत्यतिशयं विदध्याद्दृष्टिर्गान्धर्वशालादौ ॥ १६ ॥
तावद्दातुस्तस्य तु सा पाणिं ग्राहयेत्ततस्तस्याः ।
ब्रूयात्तावदलाभे स्वीयं वस्त्वप्यतः मासम् ॥ १७ ॥
प्रच्छन्नं वा तैः सह संयोगं स्वयमजानती भूत्वा ।
रचयित्वाऽथ ज्ञात्वा धर्मस्थेषु प्रकाशनं कुर्यात् ॥ १८ ॥
मोचितकन्याभावां मनसिजसूत्रग्रहात्तया कुशलाम् ।
आभ्यासिके च योगे निपुणां कन्यां स्वकीयेषु ॥ १९ ॥
सख्या वा दास्या वा सुभगामेनामत्रासृजन्त्येताः ।
इत्युपचाराः कथिताः केचिच्छास्त्रानुसारेण ॥ २० ॥
पाणिग्रहणविधातुर्वेश्याकन्या तु वत्सरं वश्या ।
ऊर्ध्वं तस्मात्कालात् कथितः किल कामचारोऽस्याः ॥ २१ ॥
तस्मिन्नप्यथ काले यस्यां रात्रावसौ हि सापेक्षः ।
तस्यामन्यान् हित्वा यायादित्येव शास्त्रार्थः ॥ २२ ॥
इति वेश्यापाणिग्रहमाह स सौभाग्यवर्धनं वीरः ।
एतेन व्याख्याता कन्या रङ्गोपजीवस्य ॥ २३ ॥
उपकुर्यादेषां यः सातिशयं चारु तौर्यत्रितये ।
तस्मै दद्यादेनां यः स्याद्रङ्गोपजीवी तु ॥ २४ ॥
सुभगंकरणान्येवं पाणिग्रहणानि पण्यकन्यानाम् ।
उक्त्वा राजकुमारः संप्रति यतते वशीभावे ॥ २५ ॥
कनककणामरिचानां माक्षिकमिश्रेण चारु चूर्णेन ।

एतेन व्याख्यातं भासश्येनोरगाशिनामस्थ्नाम् ।
अञ्जनमित्थमुदीरितमिह वशदं वीरभद्रेण ॥ ४० ॥
पानं सशर्करस्य च वस्तोरणमुष्कसिद्धस्य ।
पयसो वृषत्वयोगो वात्स्यायनकामशास्त्रेषु ॥ ४१ ॥
क्षीरेण च सह पानं भवति विदार्यास्तथाऽऽत्मगुप्तायाः ।
तादृक्क्षीरिकया सह पानं क्षीरस्य चैतादृक् ॥ ४२ ॥
पयसा सशर्करेण हि शृङ्गाटककसेरुचारुमधुकानि ।
पिष्टानि साधु कृत्वा सहितानि क्षीरकाकोल्या ॥ ४३ ॥
मन्दानलेन पक्त्वा घृतमध्ये यावदर्थमालिह्य ।
भवति समर्थः पुरुषोऽनन्ताभिस्त्रीभिरासङ्गे ॥ ४४ ॥
अण्डरसैश्चटकानां निस्तुषतिलभावनं विधायेह ।
गोधूममाषचूर्णं निजगुप्तायाः फलं चैव ॥ ४५ ॥
शृङ्गाटकं कसेरुं क्षीरेणाज्येन चेदमथ सितया ।
पायसमेतैः पक्वं भुक्त्वा वृषवद्भवेत् स्त्रीषु ॥ ४६ ॥
क्षीरेणैव विदार्याः कृत्वा पेयां मियालबीजानाम् ।
पानात्स्त्रीषु बहुविधं पुरुषः सामर्थ्यमाप्नोति ॥ ४७ ॥
निजगुप्तया विदार्या शर्करया चाथ सर्पिषा मधुना ।
गोधूमचूर्णरचितां भुक्त्वा स्यात्पोलिकां शस्तः ॥ ४८ ॥
चटकरसैः संसिद्धात्तण्डुलतः पायसं विनिर्वर्त्य ।
मधुनाऽऽज्येन च भुक्तं कुरुते संभोगसामर्थ्यम् ॥ ४९ ॥
मध्वाज्यशर्कराणां मधुकस्याथ द्विकं द्विकं हि पलम् ।
कर्षेण मधुरसायाः पयसः प्रस्थेन चैवेह ॥ ५० ॥

लिङ्गध्वजस्य पुंसः संसर्गः स्याद्वशीकरणम् ॥ २६ ॥
वातोद्भ्रान्तदलानि हि मृतनिर्माल्यं कलापिनामस्थि ।
संचूर्णितमवचूर्णनविधिना नारीवशीकरणम् ॥ २७ ॥
मण्डलकऽर्पाश्चूर्णं मधुसंयुतं स्वयं मृतायाः ।
स्नानादिह सामळकं कथितं परमं वशीकरणम् ॥ २८ ॥
वज्रस्नुह्याः खण्डं कृत्वा खलु चारु गण्डकं चाथ ।
चूर्णैर्गन्धकशिलयोरभ्यक्तं सप्तकृत्वस्तु ॥ २९ ॥
संशोष्य चूर्णयित्वा मधुना लिङ्गध्वजस्य संयोगः ।
प्रोक्तोऽसौ सत्या अपि शास्त्रे परमो वशीकारः ॥ ३० ॥
कृत्वैतेन च धूमं रात्रौ तद्धूमसंगसंछन्नम् ।
सौवर्णं चन्द्रमसं दर्शयतीति स्फुटं शास्त्रे ॥ ३१ ॥
वानरपुरीषमिश्रैरेतैर्यामवकिरेदसौ कन्याम् ।
नान्यस्तामिह लभते यत्नशतेनापि संयुक्तः ॥ ३२ ॥
खण्डान्यथ च वचायाः लिप्तान्याम्रोद्भवैः शुभैस्तैलैः ।
उत्कीर्य शिंशपायाः स्कन्धे संस्थापयेदयनम् ॥ ३३ ॥
आचक्षतेऽनुलेपनमेतत्खलु देवकान्तनाम्नेह ।
एष च परमः प्रोक्तः शास्त्र उपायो वशीकरणे ॥ ३४ ॥
उत्कीर्य यं च वृक्षं तनुशकलानीह खदिरसारस्य ।
स्थाप्यन्ते षण्मासादग्रे तद्गन्धभाञ्जि स्युः ॥ ३५ ॥
अनुलेपनमिदमुक्तं शास्त्रे गन्धर्वकान्तनाम्नेह ।
आचक्षते च परमं वशकरणं कामशास्त्रज्ञाः ॥ ३६ ॥
सहकारतैलमिश्रास्तगरविमिश्राः प्रियङ्गवश्चैव ।
उत्कीर्य नागकेसरमयनविनिहितास्ततोऽपहृताः ॥ ३७ ॥
अनुलेपनमिदमुक्तं वशकरणं नागकान्तनाम्नेह ।
समशैलाञ्जनसहितं पुण्यं वशदं च चक्षुष्यम् ॥ ३८ ॥
उष्ट्रस्यास्थि रसेन च भावितदग्धं हि भृङ्गराजस्य ।
उष्ट्ररूपाञ्जनकं स्यात्तस्यैवास्थ्ना दृशोर्दत्तम् ॥ ३९ ॥

एतेन व्याख्यातं भासश्येनोरगाशिनामस्थ्नाम्।
अञ्जनमित्यमुदीरितमिह वशदं वीरभद्रेण ॥ ४० ॥
पानं सशर्करस्य च वस्तोरणमुष्कसिद्धस्य।
पयसो वृषत्वयोगो वात्स्यायनकामशास्त्रेषु ॥ ४१ ॥
क्षीरेण च सह पानं भवति विदार्यास्तथाऽऽत्मगुप्तायाः।
तादृक्क्षीरिकया सह पानं क्षीरस्य चैतादृक् ॥ ४२ ॥
पयसा सशर्करेण हि शृङ्गाटककसेरुचारुमधुकानि।
पिष्टानि साधु कृत्वा सहितानि क्षीरकाकोल्या ॥ ४३ ॥
मन्दानलेन पक्त्वा घृतमध्ये यावदर्थमालिह्य।
भवति समर्थः पुरुषोऽनन्ताभिस्त्रीभिरासङ्गे ॥ ४४ ॥
अण्डरसैश्चटकानां निस्तुषतिलभावनं विधायेह।
गोधूममाषचूर्णं निजगुप्तायाः फलं चैव ॥ ४५ ॥
शृङ्गाटकं कसेरुं क्षीरेणाज्येन चेदमथ सितया।
पायसमेतैः पक्वं भुक्त्वा वृषवद्भवेत् स्त्रीषु ॥ ४६ ॥
क्षीरेणैव विदार्याः कृत्वा पेयां भियालवीजानाम्।
पानात्स्त्रीषु बहुविधं पुरुषः सामर्थ्यमाप्नोति ॥ ४७ ॥
निजगुप्तया विदार्या शर्करया चाथ सर्पिषा मधुना।
गोधूमचूर्णरचितां भुक्त्वा स्यात्पोलिकां शस्तः ॥ ४८ ॥
चटकरसैः संसिद्धात्तण्डुलतः पायसं विनिर्वर्त्य।
मधुनाऽऽज्येन च भुक्तं कुरुते संभोगसामर्थ्यम् ॥ ४९ ॥
मध्वाज्यशर्कराणां मधुकस्याथ द्विकं द्विकं हि पलम्।
कर्षेण मधुरसायाः पयसः मस्येन चैनेह ॥ ५० ॥
अमृतमिदं हि षडङ्गं मेध्यं वृष्यं प्रयुक्तमायुष्यम्।
युक्तरसं च निगदितं वात्स्यायनवीरभद्राभ्याम् ॥ ५१ ॥
छागघृतं गोक्षीरं कल्कं मधुकस्य चैव पिप्पल्याः।
पक्वं सह च कषायैर्गुन्द्राभीरुश्वदंष्ट्राणाम् ॥ ५२ ॥
पुष्पारम्भे माशनमन्वहमेतस्य वृष्यमायुष्यम्।

मेध्यं युक्तरसं ननु कथितं श्रीवीरभद्रेण ॥ ५३ ॥
क्षुण्णं श्रीपर्णीफलमथ साभीरुं तथा श्वदंष्ट्राख्याम्।
आमकृतिनीरपक्वां कथितो नीराचतुर्भागः ॥ ५४ ॥
पुष्पारम्भणमस्य प्राशनमुक्तं दिने दिने प्रातः।
मेध्यं युक्तरसं ननु वृष्यं चैवाथ चायुष्यम् ॥ ५५ ॥
यवचूर्णं समभागं युक्तं चूर्णैस्तथा श्वदंष्ट्रायाः।
पूपलिकामश्नीयादुत्थायैवान्वहं प्रातः ॥ ५६ ॥
एतन्मेध्यमुदाहृतमायुष्यं वृष्यमथ च युक्तरसम्।
श्रीवीरभद्रकृतिना नानाशास्त्राणि संवीक्ष्य ॥ ५७ ॥
आयुर्वेदाद्वेदात्तन्त्रात्तथाऽऽप्तवाक्येभ्यः।
योगा एते ज्ञेयाः प्रीतेः प्रीतिप्रदा नित्यम् ॥ ५८ ॥
अशुचिद्रव्ययुतानिह जीवाघातप्रपांस्तथा नैव।
संदिग्धानुपयुञ्ज्याद्देहक्षैण्यप्रदांश्चैव ॥ ५९ ॥
ब्राह्मणसुहृदभिनन्दितमिह शिष्टैर्यच्च निन्दितं नैव।
मङ्गल्यं च भवेद्यत्तद्योक्तव्यं सुखे शक्तम् ॥ ६० ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते।
औपनिषदाधिकरणे प्रथमोऽध्यायः कृतः सार्धः ॥ ६१ ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ सप्तमे औपनिषदेऽधिकरणे प्रथमोऽध्यायः।

---

## अथ सप्तमे औपनिषदिकाधिकरणे द्वितीयोऽध्यायः।

औपनिषदद्वितीयं दोर्द्वैताद्वैतवारितद्वैतः।
श्रीवीरभद्रनामा कामागमनिर्णये तनुते ॥ १ ॥
यो रञ्जयितुमशक्तो भवति हि चण्डस्फुरत्स्मरावेगाम्।
संतनुयात्स तु योगानुक्तान् वात्स्यायनेनेह ॥ २ ॥
करमर्दनमारचयेत्संबाधस्येह पूर्वमादरतः।

रत्यारम्भं कुर्यादस्या रसलाभकाले तु ॥ ३ ॥
श्रान्तार्तयोस्तथापि च चण्डे वेगे तयाऽतिवयसोऽपि ।
आख्यातमौपरिष्टकमानयने नष्टरागस्य ॥ ४ ॥
अथवाऽपद्रव्याणि हि योज्यान्यत्रेति काममार्गज्ञाः ।
तानि च दृप्यतया ननु कर्मसहिष्णूनि गदितानि ॥ ५ ॥
हेमरजतकालायसदशनगैवलताम्रसाध्यानि ।
त्रपुससीसमयानि च मृदुशीतानीह तान्याहुः ॥ ६ ॥
एतद्धि बाभ्रवीयाः वात्स्यायनसंमते तु तत्सात्म्यात् ।
ध्वजमानान्तरयुक्तं बिन्दुभिरधिकैः कठोरान्तम् ॥ ७ ॥
एते द्वे संघाटी त्रिप्रभृति स्यात्तु चूडकं क्रमतः ।
लतिकामेकामिह वा वसनैरावेष्टितां कुर्यात् ॥ ८ ॥
कथितोऽयमेकचूडः कञ्चुकमथ जालकस्वरूपाख्यम् ।
मुखयुग्मकस्यरन्ध्रः स्थूलोऽप्यथ कर्कशः कथितः ॥ ९ ॥
चूडो वृषणगुडिकया युक्तो मानेन योजितः कट्याम् ।
नालकमलाबुकस्य च तैलाद्यैर्भावितो वेणुः ॥ १० ॥
अपविद्धयोगनिचया इत्याद्याः शास्त्रदृष्टितः सुलभाः ।
अपविद्धव्यवहाराश्रयनं ननु दाक्षिणात्यानाम् ॥ ११ ॥
व्ययनकृतौ तु विनाशः संभावित इति नोदितस्तथा स्पष्टः ।
श्रीवात्स्यायनमुनिना तद्वच्छ्रीवीरभद्रेण ॥ १२ ॥
हयगन्धाशैवालैर्बृहतीफलसवरकन्दसङ्घातैः ।
माहिषनवनीतेन च नीलद्विपकर्णवज्ररसैः ॥ १३ ॥
एकैकेन तु मर्दनमिह मासिकवर्धनं विनिर्दिष्टम् ।
एतैरेव कषायैः पक्के तैले तु षाण्मास्यम् ॥ १४ ॥
बृहतीफलरससहितं बीजं त्रपुसस्य दाडिमस्यापि ।
अपि हस्तिकर्णकन्दः पक्वो मृद्वग्निना तैले ॥ १५ ॥
परिमर्दनपरिषेकौ वृद्धिकरौ द्वौ विकल्पतः कथितौ ।

१ 'गवलं श्रृङ्गं' इति जयमङ्गला ।

अवबुध्येतेत्याधानाक्षेभ्यो वर्धने योगान् ॥ १६ ॥
स्नुक्कण्टककृतचूर्णैः पुनर्नवालाङ्गलीजटामिश्रैः।
वानरपुरीषसहितैः कीर्णा नैवान्यकामा स्यात् ॥ १७ ॥
सोमलताऽप्यवल्गुजा भृङ्गो लोहोपजिह्विका चैव।
चूर्णैरेतेषामिह सह च तथा व्याधिघातस्य ॥ १८ ॥
जम्बूफलस्य रसतो निर्यासेनाथ तद्धनं रचितम्।
अनुलिप्ते संबाधे गमनाद्रागो विनष्टः स्यात् ॥ १९ ॥
चूर्णितगोपालिकया बहुपादिकयाऽथ जिह्विकाचूर्णैः।
माहिषतक्रविमिश्रे रचितस्नानक्रियायास्तु ॥ २० ॥
नीपाम्रातककुसुमैर्जम्बूकुसुमैस्तथापि संयुक्तम्।
अनुलेपनं प्रतनुते दौर्भाग्यं तत्स्रजथैव ॥ २१ ॥
आदरकृतः प्रलेपः फलतः किल साधु कोकिलाक्षस्य।
हस्तिन्याः संतनुते संहतिमिह चैकरात्रं हि ॥ २२ ॥
सर्षपसुगन्धयोगात्पद्मोत्पलकन्दचारुचूर्णानि।
पिष्टानि सह च मधुना लेपे मृग्या विशालत्वम् ॥ २३ ॥
आमलकानि शुभानि तु भावनमासां त्ववल्गुजाफलतः।
सोमार्कयोश्च दुग्धैः स्नुह्याः क्षीरैस्तथा निपुणम् ॥ २४ ॥
श्वेतीकरणमिदं स्यात्केशानां साधु भाषितं मुनिभिः।
प्रत्यानयनमथोक्तं कथयामस्तन्मतेनैव ॥ २५ ॥
मदयन्तिकाकुटजयोर्बीजैर्मूलैश्च सूक्ष्मपर्णीनाम्।
गिरिकर्णिकया चैवं स्नानं तादृग्विनिर्दिष्टम् ॥ २६ ॥
अभ्यङ्गः कृष्णीकृतिरेतैरेवेह तैलसंपक्वः।
क्रमतः प्रत्यानयनं कथितं शास्त्रानुसारेण ॥ २७ ॥
श्वेताश्वस्य मुष्कैः स्वेदो यदि साधु सप्तकृत्वः स्यात्।
आलक्तकस्य योगादस्याः श्वेतोऽधरो भवति ॥ २८ ॥
प्रत्यानयननिदानं तस्य च मदयन्तिकादि पूर्वोक्तम्।

बहुपादिका च कुष्ठं तगरं सुरदारुतालीं च ॥ २९ ॥
एतैरुपलिप्तो यो वंशः स्याद्वज्रकण्टकैश्चैव ।
शब्दश्रवणादस्य हि वश्या स्यान्नात्र संदेहः ॥ ३० ॥
धत्तूरफलयुक्तादभ्यव्यवहारान्महानिहोन्मादः ।
प्रत्यानयनं प्रोक्तं भुक्ताज्जीर्णाद्गुडादस्य ॥ ३१ ॥
बहुपादिका च तगरं कुष्ठं हरितालमथ शिला चैव ।
एतद्भक्षितबर्हिपुरीषेण लिप्तहस्तस्य ॥ ३२ ॥
हस्ते यद्वस्तु न तद्दृश्यं भवतीति चित्रयोगज्ञाः ।
क्षीराकृत्युदकं स्यादङ्गारतृणभस्मतैलाभ्याम् ॥ ३३ ॥
अभयाम्रातकयोरथ पिष्ट्वा श्रवणप्रियङ्गुकाभिश्च ।
लिप्तं हि लोहभाण्डं ताम्रं स्यान्नात्र संदेहः ॥ ३४ ॥
श्रवणप्रियङ्गुतैलैर्निर्मोकस्याथ पट्टवस्त्रस्य ।
वर्त्या दीपात्पश्यति काष्ठं सर्पाकृति परितः ॥ ३५ ॥
गोक्षीरस्य च पानं श्वेतायाः श्वेतजीववत्सायाः ।
आयुष्यं च यशस्यं तद्वद्विप्राशिषः शस्ताः ॥ ३६ ॥
श्रीवीरभद्रकृतया वात्स्यायनसूत्रतत्त्वसंकथया ।
अवगतकामविचारो भवति जनो निन्दिताद्विरतः ॥ ३७ ॥
काममिवास्मात्प्रत्ययमर्थं च धर्मं तथाऽखिलं लोकम् ।
बुद्ध्वा कुरुतात् कुनयो या अविगीताः पुराणेषु ॥ ३८ ॥
श्रीवात्स्यायनमुनिरपि चक्रे यद्ब्रह्मचर्यमास्थाय ।
तदधीत्य कामशास्त्रं ये दुर्मार्गा न ते शिष्टाः ॥ ३९ ॥
वेदेषु नाभिचारा ह्यागमविद्यासु वाममार्गाः किम् ।
तद्वदिहापि विगीता अर्थाः केचिन्न दोषाय ॥ ४० ॥
विदिताखिलतत्त्वा अपि मुनयो नैवेह निन्दिताचरणाः ।
परवस्त्वनियतविषया दोषस्तस्मान्न शास्त्रस्य ॥ ४१ ॥
इत्यनघाय निबन्धानवलोक्यासौ स्मरागमे निपुणः ।
अकृत स्फुटतत्त्वानि हि वात्स्यायनकामसूत्राणि ॥ ४२ ॥

श्रीरामचन्द्रनन्दनवीरश्रीवीरभद्रदेवेन ।
एकान्तमार्यमतिना निर्णीतः काममूत्रार्थः ॥ ४३ ॥
यो कर्णति वसुदाने पार्थति समरोत्सवावदानेषु ।
धर्मे धर्मति रूपे नकुलति सहदेवति ज्ञाने ॥ ४४ ॥
शरदिन्दुबिम्बगङ्गास्मरहरसदृशाच्छकीर्तिचन्द्रेण ।
हरभालानलविषमसतापतापेन तेनेह ॥ ४५ ॥
सप्ताधिकरणमेतत् षट्त्रिंशत्परिमितस्फुटाध्यायम् ॥
वात्स्यायनकृतशास्त्रं व्याख्यातं वीरभद्रेण ॥ ४६ ॥
दृष्ट्वैतदस्फुटार्थान्यपि सूत्राणीह कामशास्त्रस्य ।
बुद्ध्वा रचयत धीरो लीलाश्वेतोभुवोऽनुमताः ॥ ४७ ॥
यावन्मुरभिदि लक्ष्मीः शम्भोर्वामाङ्गमद्रिजा यावत् ।
तावदसौ स्मरकुतुकं ग्रन्थः मख्यापयन्नस्तु ॥ ४८ ॥
हरलोचनहरलोचनरसशशिभि( १६३३ )र्विश्रुते समये ।
फाल्गुनशुक्लप्रतिपदि पूर्णो ग्रन्थः स्मरस्मेरः ॥ ४९ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
औपनिषदाधिकरणे चरमोऽध्यायः कृतः साङ्गः ॥ ५० ॥

इति श्रीवीरभद्रदेवविरचिते कन्दर्पचूडामणौ सप्तमे औपनिषदिकेऽधिकरणे द्वितीयोऽध्याय ।

समाप्तं चेदं सप्तममौपनिषदाधिकरणम् ।

---

इति श्रीवीरभद्रविरचितः कन्दर्पचूडामणिः समाप्त ॥

| अयपाठ | सुपाठ | पृ | प |
|---|---|---|---|
| ०त्सरजये० | ०त्सरजये० | ,, | ९ |
| ०स्थानादिनिर्वन्त्यम् | ०स्थानादि निर्वन्त्यम् | ,, | २० |
| कुसुमादिवासकेशाभि | कुसुमादि वासकेशाभि | ७८ | २ |
| भार्याधिक | भार्याधिकारिक | ,, | १६ |
| चतुर्थें० | चतुर्थ० | ,, | ,, |
| विदुदधति | विदधति | ७९ | ७ |
| व्रीडेति पातत | व्रीडाऽतिपातत | ८० | २२ |
| कृताखीभि | कृता खीभि | ८२ | १८ |
| ०सन्निद्धाने | सन्निधाने | ८३ | १७ |
| कन्यास्वसयोगान् | कन्यास्वसयोगात | ८५ | १२ |
| सुता | ऽसुता | ८७ | ९ |
| ०स्फुरन्नयनाम् | ०स्फुरन्नयना | ,, | २४ |
| विश्वास्यामिह | विश्वास्यामिह | ८९ | २० |
| ससिध्यै | ससिद्ध्यै | ९९ | १७ |
| ताहि | ता हि | १०० | १६ |
| स्पष्टौ | स्पष्ट | १०१ | १७ |
| ०भीक्ष्ण्येन | ०भीक्ष्ण्येनानु | १०५ | १५ |
| वीरभद्रन | वीरभद्रेण | १०९ | २६ |
| शिल्पकृदाद्या | शिल्पकृदाद्या | १२१ | १६ |
| ४२ | ४९ | ,, | २४ |
| ०द्वेवा० | ०द्वेदा० | १२६ | १० |